नाम्नाऽष्टवक्रं जटिलं ज्वलन्तं ब्रह्मतेजसा । मुखतोऽग्निमुद्गिरन्तं तपोराशिमिवोत्थितम्
अहो किं वा ब्रह्मतेजो मूर्त्तिमन्तमिव स्वयम् । नखश्मश्रुसुदीर्घञ्च शान्तं तेजस्विनं परम्

पुटाञ्जलियुतं भक्त्या भीतं प्रणतकन्धरम् ।
दृष्ट्वा हसन्तीं राधां तां वारयामास माधवः ॥ ३८ ॥

प्रभावं कथयामास मुनीन्द्रस्य महात्मनः । अथ प्रणम्य गोविन्दं तुष्टाव मुनिपुङ्गवः ॥

यत् स्तोत्रञ्च पुरा दत्तं शङ्करेण महात्मना ॥ ३९ ॥

अष्टावक्र उवाच ।

गुणातीत गुणाधार गुणबीज गुणात्मक । गुणीश गुणिनां बीज गुणायन नमोऽस्तु ते
सिद्धिस्वरूप सिद्ध्यंश सिद्धिबीज परात्पर । सिद्धिसिद्धगुणाधीशसिद्धानां गुरवे नमः
हे वेदबीज वेदज्ञ वेदिन् वेदविदां वर । वेदाज्ञातोऽसि रूपेश वेदज्ञेश नमोऽस्तु ते ॥४२
ब्रह्मानन्तेश शेषेन्द्र धर्मादीनामधीश्वर । सर्वे सर्वेश सर्वेश बीजरूप नमोऽस्तु ते ॥४३
प्रकृते प्राकृत प्राज्ञ प्रकृतीश परात्पर । संसारवृक्ष तद्बीज फलरूप नमोऽस्तु ते ॥

सृष्टिस्थित्यन्तबीजेश सृष्टिस्थित्यन्तकारण ।
महाविराट् तरोर्बीज राधिकेश नमोऽस्तु ते ॥ ४५ ॥
अहो यस्य त्रयः स्कन्धा ब्रह्मविष्णुमहेश्वराः ।
शाखा प्रशाखा वेदाद्यास्तपांसि कुसुमानि च ॥ ४६ ॥

संसारविफला एव प्रकृत्यंकुरमेव च । तदाधार निराधार सर्वाधार नमोऽस्तु ते ॥
तेजोरूप निराकार प्रत्यक्षानूहमेव च । सर्वाकारातिप्रत्यक्ष स्वेच्छामय नमोऽस्तु ते ॥
इत्युक्त्वा स मुनिश्रेष्ठो निपत्य चरणाम्बुजे । प्राणांस्तत्याज योगेन तयोःप्रत्यक्ष एव च
पपात तत्र तद्देहः पादपद्मसमीपतः । तत्तेजश्च समुत्तस्थौ ज्वलदग्निशिखोपमम् ॥५०॥
सततालप्रमाणन्तु चोत्थाय च पपात ह । भ्रामं भ्रामञ्च परितो लीनं कृष्णपदाम्बुजे ॥
अष्टावक्रकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् । परं निर्वाणमोक्षञ्च समाप्नोति न संशयः ॥
प्राणाधिको मुमुक्षूणां स्तोत्रराजश्च नारद । हरिणादौ पुरा दत्तो वैकुण्ठे शङ्कराय च

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
मुनिमोक्षणं नामोनत्रिंशोऽध्यायः ।

# त्रिंशोऽध्यायः

## राधाश्रीकृष्णसंवादवर्णनम् ।

नारद उवाच ।

महामुने रहस्यञ्च श्रुतं ब्रह्मन् किमद्भुतम् । मृते मुनौ किञ्चकार श्रीकृष्णो भक्तवत्सलः ॥

श्रीनारायण उवाच ।

दृष्ट्वा मृतं मुनिं कृष्णः संस्कारं कर्तुमुद्यतः । कृत्वा वक्षसि तद्देहं रुरोदोच्चैर्यथा नरः ॥
बाहुभ्याञ्च समाश्लिष्य विपेपोद्रिक्तमोहतः । निर्गतं भस्मनिकरं शवाद्गात्राङ्गघर्षणात् ॥
रक्तमांसास्थिहीनं तच्छरीरञ्च महात्मनः । षष्टिर्वर्षसहस्राणि निराहारः कृतो मुने ॥
दग्धं लोहितमांसास्थि ज्वलता जठराग्निना । वाह्यज्ञानविहीनस्य हरिपादाब्जचेतसः ॥

चितां चन्दनकाष्ठेन निर्माय मधुसूदनः ।
कृत्वाऽग्निकार्य्यं तत्रैव स्थापयामास शोकतः ॥ ६ ॥
ददौ चितायामग्निञ्च काष्ठं दत्त्वा शवोपरि ।
ज्वलितायां चितायाञ्च मूर्च्छामाप क्षणं विभुः ॥ ७ ॥

तद्देहे भस्मसाद्भूते नेदुर्दुन्दुभयो दिवि । बभूव पुष्पवृष्टिश्च तत्क्षणाद्गगनाद्धरौ ॥८॥
एतस्मिन्नन्तरे तत्र रत्नसारविनिर्मितम् । स्यन्दनञ्च मनोयायि वस्त्रमाल्यपरिच्छदम् ।
पार्षदप्रवरैर्युक्तं श्रीकृष्णसदृशैर्वरैः । आविर्बभूव गोलोकात्सुन्दरं पुरतो हरेः ॥ १० ॥
अवरुह्य रथात्तूर्णं पार्षदप्रवरा हरेः । सर्वे समानरूपास्ते प्रणम्य राधिकेश्वरौ ॥ ११ ॥
धृतवन्तं सूक्ष्मदेहं प्रणम्य च मुनीश्वरम् । रथे कृत्वा तु तं देहं जग्मुर्गोलोकमुत्तमम् ॥१२
गते मुनीन्द्रे गोलोकं वृन्दावनविनोदिनी । बभूव विस्मिता साध्वी पप्रच्छ जगदीश्वरम्

श्रीराधिका उवाच ।

कोऽयं नाथ मुनिश्रेष्ठः सर्वोपद्रववर्जितः । अतिखर्वोऽप्यनाकारस्तेजीयानतिकुत्सितः ॥
कथं वा निर्गतं भस्म देहादस्य किमद्भुतम् ।

राधाद्विलीनं सरोजस्य पत्राग्रेऽमलोपमम् ॥ १५ ॥

राधया पुण्यवान् सार्धं गोलोकञ्च जगाम ह । व्याख्यागमस्य वक्ता गोष्ठे तेऽभूवह
त्वया एतञ्च रहस्याख्यमपूर्वेण प्रभुणा । सर्वं विवरणं पूर्णं संव्यक्तं कथय प्रभो ॥
राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः । कथां कथितुमारेभे युगान्तरगतामपि ॥१८॥

श्रीकृष्ण उवाच ।

रहस्यमप्रायणीयं विख्यातं सर्वतः प्रिये । पश्चाच्छ्रोष्यसि कालेन प्रसङ्गे पितुर्मुखात्
अष्टावक्रो मुनीन्द्रोऽपि विख्यातो भुवनत्रये । परिपूर्णं यशसा जन्मना तज्जगत्त्रयम्
कृष्णस्य वचनं श्रुत्वा विमनस्का हरिप्रिया । उवाच मधुरं वक्ताल्कुल्यकण्ठोष्ठतालुका

राधिकोवाच ।

यत्तृष्णालोर्मनः पूर्णं न बभूव सुधाम्बुधौ । वितृष्णो भवति किं गोष्पदोदकपानतः ॥

वेदानां वेदवक्तॄणां विधातुर्जनकस्य च ।
महाविष्णोरीश्वरस्त्वं कोऽन्यो वक्तास्ति त्वत्परः ॥२३॥

राधिकावचनं श्रुत्वा तुष्टः कृष्णो बभूव ह । उवाच गोपनीयञ्च रहस्यं परमाद्भुतम् ॥

श्रीकृष्ण उवाच

शृणु कान्ते प्रवक्ष्येऽहमितिहासं पुरातनम् । श्रवणात् कथनाद्यस्य सर्वं पापं प्रणश्यति
महाविष्णोर्नाभिपद्माद्बभूव जगतां विधिः । ममांशस्य मत्कलया जलाकीर्णे जगत्त्रये
पुत्रा बभूवुश्चत्वारो ब्रह्मणो मानसात्पुरा । नारायणपराः सर्वे ज्वलन्तो ब्रह्मतेजसा ॥
शिशवः पञ्चवर्षीया नग्ना अज्ञानिनो यथा । वाह्यज्ञानविहीनाश्च ब्रह्मतत्त्वविशारदाः ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः । सनत्कुमारो भगवानेते चत्वार एव च ॥ २६॥
तानुवाच जगद्धाता सृष्टिं कुरुत पुत्रकाः। तेन तस्थुः पितुर्वाक्ये प्रययुस्तपसे मम॥३०
विधाता विमनस्कश्च तनयेषु गतेषु च । पितुर्दुःखाय प्रभवेत् पुत्रश्चेद्यवचस्करः ॥३१॥

ज्ञानेन निर्ममे पुत्रान् स्वाङ्गेषु च तपोधनान् ।
वेदवेदाङ्गविज्ञांश्च ज्वलतो ब्रह्मतेजसा ॥ ३२ ॥

अत्रिः पुलस्त्यः पुलहो मरीचिर्भृगुरङ्गिराः । क्रतुर्वशिष्ठो वोढुश्च कपिलश्चासुरिःकविः

ुः शङ्खः पञ्चशिखः प्रचेतास्ते तपोधनाः । बहुकालं तपस्तप्त्वा चक्रुः सृष्टिं तदाज्ञया
लवन्तस्ते सर्वे संसारं कर्त्तुमुन्मुखाः । बभूवुः पुत्रपौत्राश्च सर्वेषाञ्च तपस्विनाम् ॥
स्तु च कथा यह्वी मुनिवंशानुकीर्त्तनी । चार्थो पुण्यस्वरूपा च प्रकृतं शृणु सुन्दरि ॥
चेतसः सुतः श्रीमानसितो मुनिपुङ्गवः । सकलत्रस्तपस्तेपे दिव्यं वर्षसहस्रकम् ॥३७॥
बभूव सुतस्तस्य प्राणांस्त्यक्तुं समुद्यतः । तं सम्बोद्धुं बभूवाथ सत्या वागशरीरिणी

कथं त्यजसि प्राणांस्त्वं गच्छ शङ्करसन्निधिम् ।
सिद्धं कुरु गृहीत्वा च मन्त्रं शङ्करवक्त्रतः ॥ ३६॥

न्त्राधिष्ठातृदेवी ते सद्यः साक्षाद्भविष्यति । वरेणाभीष्टदेव्याश्च पुत्रस्ते भविता ध्रुवम्
ुर्दैववचितं विप्रो जगाम शिवसन्निधिम् । योगिनामप्यगम्यञ्च शिवलोकं निरामयम्

सकलत्रो यथा योगी तुष्टाव योगिनां गुरुम् ।
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः ॥ ४२ ॥

असित उवाच ।

जगद्गुरो नमस्तुभ्यं शिवाय शिवदाय च । योगीन्द्राणाञ्च योगीन्द्र गुरूणां गुरवे नमः
मृत्योर्मृत्युस्वरूपेण मृत्युसंसारखण्डन । मृत्योरीश मृत्युबीज मृत्युञ्जय नमोऽस्तु ते
कालरूपं कलयतां कालकालेशकारण । कालादतीत कालस्य कालकाल नमोऽस्तु ते ॥
गुणातीत गुणाधार गुणबीज गुणात्मक । गुणीश गुणिनां बीज गुणिनां गुरवे नमः ॥
ब्रह्मस्वरूप ब्रह्मज्ञ ब्रह्मभावनतत्पर । ब्रह्मबीजस्वरूपेण ब्रह्मबीज नमोऽस्तु ते ॥ ४७ ॥
इति स्तुत्वा शिवं नत्वा पुरस्तस्थौ मुनीश्वरः । दीनवत्साश्रुनेत्रश्च पुलकाञ्चितविग्रहः ॥
असितेन कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् । वर्षमेकं हविष्याशी शङ्करस्य महात्मनः ।
स लभेद्वैष्णवं पुत्रं ज्ञानिनं चिरजीविनम् । भवेद्धनाढ्यो दुःखी च मूको भवति पण्डितः

अभार्य्यो लभते भार्य्यां सुशीलाञ्च पतिव्रताम् ।
इहलोके सुखं भुक्त्वा यात्यन्ते शिवसन्निधम् ॥ ५१ ॥

इदं स्तोत्रं पुरा दत्तं ब्रह्मणा च प्रचेतसे । प्रचेतसा स्वपुत्रायासिताय दत्तमुत्तमम् ॥५२

इति श्रीब्रह्मवैवर्त्ते महापुराणे शिवस्तोत्रं समाप्तम् ।

श्रीकृष्ण उवाच ।

समाकर्ण्य मुनेः स्तोत्रं भगवान् शङ्करः स्वयम् ।
उवाच ब्रह्मणः पुत्रं स्वभक्तं भक्तवत्सलः ॥ ५३ ॥

शङ्कर उवाच ।

स्थिरो भव मुनिश्रेष्ठ जानामि तव वाञ्छितम् ।
पुत्रस्ते भविता सत्यं मदंशेन च मत्समः ॥ ५४ ॥

दास्यामि मन्त्रमतुलं सर्वेषाञ्च सुदुर्लभम् । इत्युक्त्वा च ददौ मन्त्रं तथैव षोडश
स्तोत्रं पूजाविधानञ्च कवचं परमाद्भुतम् । संसारविजयं नाम पुरश्चरणपूर्वकम्
वरं दातुमिष्टदेवी प्रत्यक्षा भवितेति च। इत्युक्त्वा विरतो रुद्रः स संनत्या जगा
अजाप परमं मन्त्रं सोऽसितः शतवत्सरम् । साक्षाद्भूत्वा वरस्तस्मै स्वयाद्दत्तःपु
पुत्रस्ते भविता सत्यं महाज्ञानी मुनेऽस्त्विति । वरं दत्त्वा स्वयमगो गोलोके मम सन्नि
कालेन च सुतस्तस्य शिवांशेन बभूव ह । ब्रह्मिष्ठो देवलो नाम्ना कन्दर्पसमसुन्द
सुयज्ञनृपतेः कन्यां रत्नमालावतीं मुदा । तां सुन्दरीं विवाहेन जग्राह सर्वमोहिनीं
स्थाने स्थाने च रहसि शतवर्षं तया सह । स रेमे निपुणश्रेष्ठः स्त्रीणां रमणकर्मणि
कालान्तरे स विरतो बभूव मुनिपुङ्गवः । सुखं सर्वं परित्यज्य धर्मिष्ठः श्रीहरिं स्मर
उत्थाय रात्रौ शयनाद्विरक्तश्च तपोधनः । स ययौ तपसे कान्ते गन्धमादनपर्वते ।

निद्रां त्यक्त्वा च तत्कान्ता न दृष्ट्वा स्वामिनं सती ।
विललाप भृशं शोकात् प्रदग्धा विरहाग्निना ॥ ६५ ॥

इतिमूर्च्छा निर्विषण्णा रुरोदोच्चैर्मुहुर्मुहुः । तत्रात्रे यथा ध्वान्तं बभूव तन्मनस्तदा॥६
आहारञ्च परित्यज्य प्राणांस्तत्याज सुन्दरी । चकार तत्सुतस्तस्याः कर्म निर्हरणादिक
तपश्चकार स मुनिर्गन्धमादनपर्वते । दिव्यं वर्षसहस्रञ्च मम भक्तो जितेन्द्रियः ॥६
नं ददर्श ह देवेन रम्भा मदनाल्लोलुपा । अतीव सुन्दरं शान्तं कन्दर्पमिव सुन्दरम्

सा च तं कथयामास निर्जने समुपस्थिता ।
विधाय वेषं यत्नेन त्रैलोक्यचित्तमोहिनी ॥ ७० ॥

रम्भोवाच ।

निबोध साधो मद्वाक्यं कामिनीनां मनोहरम् ।
त्यक्त्वा कठोरं रहसि भज मां सुखदायिकाम् ॥ ७२ ॥

त्वं वरेषु वरः पृथ्व्यां वरारोहा स्वयं वरा । विदग्धाया विदग्धस्य दुर्लभो नवसङ्गमः
यज्ञं कुर्वन्ति भूपाला भारते स्वर्गहेतुकम् । स्वर्गभोगनिमित्तञ्च भोगसारा वयं मुने ॥
स्तनयोर्युग्ममूर्ध्वोर्मे सुन्दरं मुखपङ्कजम् । हास्यभ्रूभङ्गसहितं दृष्ट्वा को न भवेत्सुखी ॥
स्त्रीरसः सुखसारश्च मुनीनामभिवाञ्छितः । रसिकासुखसम्भोगो निर्जने चातिदुर्लभः

देवो वा दानवो वापि गन्धर्वो वाथ राक्षसः ।
स्त्रीसुखेष्वप्यविज्ञेयो रम्भाया रतिवञ्चितः ॥ ७६ ॥
रहस्युपस्थितां कान्तां न भजेद्यो जितेन्द्रियः ।
गात्रलोमप्रमाणाब्दं कुम्भीपाके वसेद् ध्रुवम् ॥ ७७ ॥

सत्यं तस्याश्च वधभाक् तच्छापेन प्रणश्यति । विधाता मोहिनीशापादपूज्यो भुवनत्रये
येन त्यक्तोपस्थिता तं यथा पश्यति पुंश्चली । स्वामिपुत्रस्वबन्धूनां न तथाघातकं रुषा
परं प्रियञ्च सर्वेषां जारं जानाति पुंश्चली । यदि तेन परित्यक्ता तं हन्तुं सा ॥ दक्षिणा
पुंश्चली हिंस्रजन्तुभ्यो नरघातिभ्य एव च । दुष्टा शश्वद्दयाहीना दुरन्ता प्रतिजन्मनि ॥
त्यज ध्यानं मुनिश्रेष्ठ मुंश्चेदं तपसः फलम् । रहस्युपस्थितां मां च गृहीत्वा सुचिरं सुखम्
स रम्भावचनं श्रुत्वा तामुवाच भयाकुलः । हितं तस्य नीतिसारं परिणामसुखावहम् ॥

देवल उवाच ।

शृणु रम्भे प्रवक्ष्यामि वेदसारपरं वचः । कुलधर्मोचितं सत्यं ब्राह्मणानां तपस्विनाम्
धर्मोऽयं युक्तकाले च स्वयोषिति रतो द्विजः । सर्वत्र पूजितः शश्वदिहलोके परत्र च
ब्राह्मणःक्षत्रियो वैश्यो योऽरतःपरयोषिति । याति तस्यापूजितस्य रुष्टा लक्ष्मीर्गृहादपि
इहातिनिन्द्यः सर्वत्र नाधिकारी स्वकर्मसु । परत्रैवान्धकूपे च यावद्वर्षशतं वसेत् ॥

ग्राह्या चोपस्थिता स्त्री च गृहिणा न तपस्विना ।
त्यागे दोषः कामिनीनां शापभाक् पापभाग्गृही ॥ ८८ ॥

ब्रह्माजगद्विधातापि न विरक्तः कलत्रवान् । त्यागेद्दोषस्तत्कदाचिन्नास्माकंत्यक्त
स्वभार्याञ्च परित्यज्य यो गृह्णाति परस्त्रियम् । यशोधनायुषांहानिर्भवेज्जीवन

भुवि नास्ति यशो यस्य जीवनं तस्य निष्फलम् ।
सुसम्पदा किं राज्येन सुखेन च तपस्विनः ॥ ६२ ॥

निष्कामेन च शुद्धेन मया किन्ते प्रयोजनम् । सुवेशं सुन्दरं मात्युंवाने पश्य
इत्येवं वचनं श्रुत्वा चुकोपाप्सरसांवरा । उवाच भूयोवाक्यं तं त्रस्ता प्रस्फु

रम्भोवाच ।

चारुचम्पकवर्णाभः कन्दर्पसमसुन्दरः । तपःप्रभावात्सश्रीकः सुवेशः सम्मतः

त्वया विनान्यं कं यामि को वास्ति त्वत्परः पुमान् ।
पुंश्चली त्वां परित्यज्य का जीवति स्मरातुरा ॥ ६५ ॥
शीघ्रं मां भज विप्रेन्द्र दग्धां कामाग्निना सदा ।
कामो नश्यति मां त्यक्तो यथा रम्भा भवद्भुजः ॥ ६६ ॥

न चेच्छापं प्रदास्यामि वद वेदविदां वर । मां वा दारुणशापं वा सत्परं स्वीकुरु
दग्धाः प्राणाममी दग्धं स्वात्मा वा इतिसन्ततम् । नवमुद्रारपीयूषपानमिर्वाणता

स्वान्तदुःखेन दुःखार्तो योऽयं शपति निश्चितम् ।
तं शापं खण्डितुं शक्तो न विधाता जगत्पतिः ॥ ६९ ॥

द्विजोत्तमावच श्रुत्वा बभूवध्यानतत्परः । भोवाचकिञ्चिन्मौनरूपःसार्त कोपाच्च
दे पञ्चविंश से चित्र सर्वाथयवनिःसम् । शरीरमञ्जनाकारं रूपयौवनवर्जितम् ॥
अतीवविस्मयाकारं त्रिषु लोकेषु गर्हितम् । पुरातनं तपो नष्टं सद्यो भवतु निश्चित
इत्युक्तवा पुंश्चली कामात्कामक्रोधं जगाम सा । अचिरेण मुनीन्द्रश्च न ददर्श हरेः
पदारविन्दविरहात्समुद्विग्नो बभूव ह । ध्यातृञ्च दृष्टा चिरलं पूर्वपुण्यविवर्जित

हत्वाऽग्निकुण्डं शोकेन प्राणांस्त्यक्तुं समुद्यतः ।
मया दृष्टो वरो दत्तो दिव्यज्ञानेन बोधितः ॥ ७५ ॥

भारद्वाजस्य वृद्धः शीघ्रा ततः शान्तो बभूव ह । मद्भाग्यवशो च यत्रापि पूर्णं महा

अष्टावक्रेति तन्नाम कौतुकेन मया कृतम् ॥ १०६ ॥
मद्वाक्यात् मलयद्रोणीमिमामागम्य सत्वरः । षष्टिवर्षसहस्राणि चकार परमन्तपः ॥
तपोऽवसाने मद्भक्तो मया युक्तः कृतः प्रिये । सर्वस्मिन्प्रलये नष्टे न मद्भक्तः प्रणश्यति ॥
सुचिरेणैव तपसा ज्वलता जठराग्निना । त्यक्त्वाहारस्यान्तरञ्च भस्मपूर्णं तपो मुनेः ॥
आगतं मलयद्रोणिं मुनिर्हेतोर्मम प्रिये । अष्टावक्राच्च मद्भक्तो न भूतो न भविष्यति ॥
एवम्भूतस्तपोनिष्ठः प्रपौत्रो ब्रह्मणो मुनिः ।
निष्फलः पुंश्चलीशापाद् ब्रह्माऽपूज्यो यथा पुरा ॥ १११ ॥
इत्येवं कथितं सर्वं रहस्यञ्च महात्मनः । सुखदं पुण्यदं गूढं किं भूयः श्रोतुमर्हसि ॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
राधाप्रश्ने त्रिंशत्तमोऽध्यायः ।

---

# एकत्रिंशोऽध्यायः

## ब्रह्मणः शापकारणकथनम् ।

श्रीराधिकोवाच ।

किमाश्चर्यं श्रुतं नाथ चरितं सुमनोहरम् । अधुना श्रोतुमिच्छामि ब्रह्मणः शापकारणम् ॥
यो विधाता त्रिजगतां तपसां फलदायकः । स कथं पुंश्चलीशापादपूज्यश्च बभूव ह ॥२॥

श्रीकृष्ण उवाच ।

मन्वन्तरे रैवतश्च सुचन्द्रो नृपपुङ्गवः । तपस्वी वैष्णवश्रेष्ठो ज्ञानी परमधार्मिकः ॥ ३ ॥
स च पूर्वं तपः कुर्वन्नाजगाम मम प्रिये । इमाञ्च मलयद्रोणीं भारतेषु मनोहराम् ॥४॥
तपश्चचार राजेन्द्रो वर्षाणाञ्च सहस्रकम् । जीर्णं तस्य शरीरञ्च कठोरेण तपस्विनः ॥५॥
वल्मीकाच्छादितं देहं दृष्ट्वा धाता कृपानिधिः ।
आजगाम वरं दातुं तपःस्थानं सुनिर्जनम् ॥ ६ ॥

ण्डलुजलेनैव मम देहोद्भवेन च। सिक्तेन तत्र मन्त्रेण मया दत्तेन यो

कमण्डलुजलस्पर्शादुत्थाय नृपतिः स्वयम्।
ननाम मनसा अगतो ब्रह्माणं पुरः स्थितम् ॥ ८ ॥

तं नमन्तं राजानमुवाच कमलोद्भवः। वरं वृणिष्व राजेन्द्र यत्ते मनसि

च तद्वचनं श्रुत्वा वरं वव्रे परात्परम्। ममैव चरणे भक्तिः मदीयं दास्यमेव

कृपया च वरं प्रादा दत्तवानभिवाञ्छितम्।
स च तत्र पुरस्तस्थौ कामदेवसमप्रभः ॥११॥

स्मिन्नन्तरे राजा ददर्श रथमुत्तमम्। आकाशात्क्षिपतन्तं वै शतसूर्यसमप्रभ

तेजसाच्छादितं सर्वं सुप्रदीप्तं दिशो दश।
रत्नेन्द्रसारनिर्माणं शतचक्रसमन्वितम् ॥ १३ ॥
अमूल्यरत्नरचितं विचित्रकलशोज्ज्वलम्।
मुक्तामाणिक्यहीराणां मालाजालैश्च राजितम् ॥१४॥

नदर्पणैर्दीप्तिरतीव सुमनोहरम्। भूषितं दिव्यवस्त्रैश्च श्वेतचामरकोटिभि

पारिजातप्रसूनानां मालाजालैः सुशोभितम्।
मनोयायि महाश्चर्यं नानाचित्रेण चित्रितम् ॥१६॥

तं पार्षदैर्दिव्यै रत्नभूषणभूषितैः। चतुर्भुजैः श्यामलैश्च ज्वलद्भिः स्थिरयौव

वस्त्रपरीधानैश्चन्दनागुरुचर्चितैः। दृष्ट्वा रथस्थान् देवांश्च ननाम नृपतिर्मुद

श तस्य शिरसि पुष्पवृष्टिर्बभूव ह। नेदुर्दुन्दुभयः स्वर्गे वालकाश्च मनोहर

णो मुनयः सिद्धाः प्रकुर्वन्तो मुदाशिषम्। प्रशशंसुः सुराः सर्वे राजानं हर्ष

राजा च पार्षदान्ध्यात्वा तद्रूपश्च बभूव ह।
पार्षदास्तं रथे कृत्वा नीत्वा जग्मुर्ममालयम् ॥२१॥
मदीयं पार्षदो भूत्वा स च तस्थौ ममान्तिके।
ततः स्वमन्दिरं यान्तं ददर्श मोहिनी विधिम् ॥२२॥

पुष्पोद्याने च रम्ये च पुष्पचन्दनवायुना। सद्यो मुमोह तं दृष्ट्वा मदान्धा मदनानले

विलोक्य चक्रनयना जुगोप सस्मितं मुखम् । सिन्दूरबिन्दुं दधती कस्तूरीबिन्दुना सह
चारुचम्पकवर्णाभा सततं स्थिरयौवना । बृहन्नितम्बयुगला पीनश्रोणिपयोधरा ॥२५॥
शरत्पार्वणशुभ्रांशुप्रभामुष्टकरानना । सूक्ष्मवस्त्रपरीधाना रत्नालङ्कारभूषिता ॥ २६ ॥

त्रैलोक्यं मोहितुं शक्ता कटाक्षेणैव लीलया ।
अतीव कामिनी शश्वद्गजेन्द्रमन्दगामिनी ॥२७॥
पुलकाङ्कितसर्वाङ्गी मूर्च्छां संप्राप वर्त्मनि ।
समीक्ष्य च तां ब्रह्मा जगाम श्रीहरिं स्मरन् ॥२८॥
सविकारं न हि प्राप ह्यात्मारामो जितेन्द्रियः ।
ब्रह्मलोकञ्च संप्राप ब्रह्मा च जगतां पतिः ॥२९॥

सकामा सा च कुलटा बभूव हतचेतना । दिवानिशञ्चिन्तयन्ती स्वप्ने ध्याने बभुर्मुखम् ॥
सर्वं जारं विसस्मार तत्याजाहारमीश्वरी । उत्तिष्ठन्ती निवसती शयनं कुर्वती क्षणम् ॥
तत्पार्श्वे यथा शस्यं भ्रमत्येव यथा पथि । एतस्मिन्नन्तरे रम्भा विद्याधाप्सरसां वरा ॥
गच्छन्ती कामलोकं सा सकामा तेन वर्त्मना ।
दृष्ट्वा सहचरीं तत्र शुष्ककण्ठोष्ठतालुकाम् । अभिप्रायेण बुबुधे पप्रच्छ सस्मिता तदा ॥

रम्भोवाच ।

कथमेवंविधा त्वं हि त्रैलोक्यचित्तमोहिनी । वद शीघ्रं महाभागे रम्भाऽहं चेतनं कुरु ॥
समुद्दिश्य सकामा त्वं गच्छ त्वं कान्तमीप्सितम् ।
कुलटा सर्वसौभाग्या न वयं कुलपालिकाः ॥३५॥
सर्वे व्यग्रा इन्द्रियाणां सुखाय भुवनत्रये ।
यान्ति प्राणा यतः काले का लज्जा तत्र जीविनाम् ॥३६॥
[illegible] ह्यात्मनः पुरः कश्चित् प्रियोऽस्ति भुवनत्रये ।
कान्ते पत्यौ स्वबन्धौ च स्नेहो यः स्वात्महेतुकः ॥३७॥
सम्बन्धः स्वात्मनो यावत्तावत् स्नेहोऽस्ति तत्र वै ।
येषु यन्मानसं शश्वत्तेषां प्राणास्त एव हि ॥३८॥

गच्छन्ती कामलोभाच्च सकामा पश्य मां प्रिये ।
रहः शय्या समालोक्य मनसा गच्छ मे प्रियम् ॥४३॥

निषद्य नीवीं वेशांश्च कृत्वा वेशमनोहरम् । मुनिमोहकरीं सद्यः स्वमोहं कुरु मोहिनि
सम्भाष्य मधुवाणीं वचनं हृदयङ्गमम् । रत्नसमानं प्रभावश्च स्त्रीजातीनां जगत्त्रये॥४४॥
स्याभिप्रायकरं सुरतं न प्रकाश्यः कदाचन । स्वान्ते कान्तं स्वानुरक्तं प्राप्नोति सहचरीं विना
सन्ध्यासने हृदयं प्रकाशयञ्च प्रिये प्रिये । अन्यथा योगदाहेन मरणायैव कल्पते ॥
तस्याश्च वचनं श्रुत्वा तस्मिता सा सुलज्जिता । इदञ्च कथयामास यदैतोस्ताहृशीगतिः
मोहिन्युवाच ।

यावद् दृष्टो मया रम्भे निर्जने चतुराननः । तावन्मनो मेऽस्ति दग्धं शश्वत्मनसिजानलैः
न दृश्यमात्मने मह्यमन्तरे न हि रोचते । जानामि नाहमुदयं यामिनीशदिनेशयोः ॥४६
अधुना न हि भेदो मे सततं स्वप्नजागरयोः । मम प्राणाः प्रतीक्षन्ते तस्यालिङ्गनमेव च
क्षणं विलम्ब न चिरं वाञ्छन्ती नान्यथा प्रिये ।
कामज्वालाकलापेन स्वर्णाकारं कलेवरम् ॥४८॥

अनाहारेण चेदानीं बभूव दग्धशैलवत् । गन्तुं स्थातुं न शक्ताहं शयनं कर्तुमुद्यता ॥४९॥
धिगस्तु पुंश्चलीजातिं मामेव वा विशेषतः । कमुपायं करिष्यामि वद रम्भेति साम्प्रतम्
लज्जां वापि शरीरं वा विसृजामि च किं द्वयोः ॥५०॥

मोहिनीवचनं श्रुत्वा श्रेष्ठस्याप्सरसां वरा । तामुवाच हितं नीतमुपायं शुभकारणम् ॥
रम्भोवाच ।

वधमेतदहो भद्रे भद्रस्य कारणं तव । सर्वं स्थापयिष्यामि श्रृणूपायं भयं त्यज ॥५२॥
कृत्वा वेशमपूर्वञ्च पूर्वमाराध्य मन्मथम् । तेन सार्धं स्वयं गत्वा मोहं कुरु च भामिनि
जितेन्द्रियाणां प्रवरं साक्षान्नारायणात्मकम् । विना कामसहायेन काशक्ताजेतुमीश्वरम्
भज कामं तपः कृत्वा पुष्करे व्रज मोहिनि । सद्यःसाक्षात् स भविता दयालुर्योषितांप्रभुः
इत्युक्त्वा तामप्सरसां प्रवरा काममन्तिकम् ।
जगामेन्द्रियशान्त्यर्थं सा जगाम च पुष्करम् ॥५६॥.

पुष्करे च तपः कृत्वा कामं सम्प्राप्य मोहिनी । जगाम तेन सार्धञ्च ब्रह्मलोकमनामयम्
दद्दर्श निर्जनस्थञ्च मोहिनी कमलोद्भवम् । तमेव मुग्धं कर्तुञ्च समारेभे पुरःस्थिता ॥
क्षणं ननर्त सुचिरं सुगानेन क्षणं जगौ । सङ्गीतं मम सम्बन्धि भक्तानां चित्तमोहनम् ॥

विधाता जगतां तस्याः श्रुत्वा सङ्गीतमीप्सितम् ।
पुलकाञ्चितसर्वाङ्गो मुमोह साश्रुलोचनः ॥६०॥

दृष्ट्वा मुग्धं चतुर्वक्त्रं मोहिनी हृष्टमानसा । कलाममाणं भावञ्च चकार तत्र लीलया ॥
स्वाङ्गं सन्दर्शयामास स्मेरभ्रूभङ्गपूर्वकम् । का लज्जा तस्य संसारे यः कामहृतचेतनः ॥
विहाय ब्रह्मा सद्ध्यानं ततश्चञ्चलो बभूव । प्रदाय तस्य दानञ्च विरतः श्रीहरिं स्मरन् ॥
विहाय ब्रह्मणो भावं शुष्ककण्ठोष्ठतालुका । हतोद्यमा सा तुष्टाव कामं कामप्रदं परम्

मोहिन्युवाच ।

सर्वेन्द्रियाणां प्रवरं विष्णोरंशञ्च मानसम् । तदेव कर्मणां बीजं तदुद्भव नमोऽस्तु ते ॥

स्वयमात्मा हि भगवान् ज्ञानरूपो महेश्वरः ।
नमो ब्रह्मन् जगत्स्रष्टस्तदुद्भव नमोऽस्तु ते ॥ ६६ ॥

दृष्टिः सर्वशरीरेषु हृष्टिश्च योगिनामपि । जगत्साध्य दुराराध्य दुर्निवार नमोऽस्तु ते
सर्वाजित जगज्जेता जीवजीव मनोहर । रतिबीज रतिस्वामिन् रतिप्रिय नमोऽस्तु ते

शश्वद्योषिद्धिष्ठान योषित्प्राणाधिक प्रिय ।
योषिद्वाहन योषास्त्र योषिद्बन्धो नमोऽस्तु ते ॥६९॥

पतिसाध्यकराशेषरूपाधार गुणाश्रय । सुगन्धिवातसचिव मधुमित्र नमोऽस्तु ते ॥
शश्वद्योनिकृताधार स्त्री सन्दर्शनवर्धन । विदग्धानां विरहिणां प्राणान्तक नमोऽस्तु ते

अकृपा येषु ते नाथं तेषां ज्ञानविनाशनम् ।
अनुरूपभक्तेषु कृपासिन्धो नमोऽस्तु ते ॥७२॥

तपस्विनाञ्च तपसां विघ्नबीजावलीलया ।
मनः सकामं मुक्तानां कर्तुं शक्त नमोऽस्तु ते ॥७३॥

तपः साध्याश्चाराध्याश्च सदैवं पाञ्चभौतिकाः । पञ्चेन्द्रियकृताधार पञ्चबाण नमोऽस्तु ते

मोहिनीत्येवमुक्त्वा मनसा सा विधेः पुरः । विरराम नम्रवक्त्रा बभूव ध्यानतत्परा ॥
उक्तं माध्यन्दिने काले स्तोत्रमेतन्मनोहरम् ।
पुरा दुर्वाससा दत्तं मोहिन्यै गन्धमादने ॥७६॥
स्तोत्रमेतन्महापुण्यं कामी भक्त्या यदा पठेत् ।
अभीष्टं लभते नूनं निष्कलङ्को भवेद् ध्रुवम् ॥७७॥
चेष्टां न कुरुते कामः कदाचिदपि तं प्रियम् । भवेदरोगी श्रीयुक्तः कामदेवसमप्रभः ।
वनितां लभते साध्वीं पत्नीं त्रैलोक्यमोहिनीम् ॥७८॥
इति श्रीब्रह्मवैवर्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
राधाप्रश्ने मोहिनीकृतस्तोत्रप्रसङ्गो नामैकत्रिंशोऽध्यायः ।

---

## द्वात्रिंशत्तमोऽध्यायः

### ब्रह्ममोहिन्योः संवादः ।

श्रीकृष्ण उवाच ।

मोहिनीस्तवनेनैव कामस्तुष्टो बभूव ह । चकार शरसन्धानमन्तरिक्षे स्थितः स्वयम् ॥
मन्त्रपूतं महास्त्रञ्च चिक्षेप पितरं मुदा । बभूव चञ्चलो ब्रह्मा कामास्त्रेण च कामुकः ॥
क्षणं निरीक्षणं चक्रे मोहिन्यास्ये पुनः पुनः ।
ज्ञानं प्राप्य तदा धाता विरराम हरिं स्मरन् ॥३॥
बुबुधे मनसा सर्वं चरितं मन्मथस्य च । शशाप तं सुतमपि विधाता क्रोधविह्वलः ॥४॥
हे काम यौवनोन्मत्त मूढैश्वर्येण गर्वितः । भविता दर्पभङ्गस्ते गुरोर्मे हेलनादिति ॥५॥
हतोद्यमो जगामाशु मन्मथो मधुना सह । ब्रह्मणः शापभीतश्च शुष्ककण्ठोष्ठतालुकः ॥
इत्युवाच जगद्धाता मोहिनीं मदनातुराम् ।
चतुर्वक्त्रञ्च पश्यन्तीं सस्मितं वक्रचक्षुषा ॥७॥

मातर्मोहिनि गच्छ त्वं निष्फलं कर्म चात्र वे ।
ज्ञातस्त्वाभिप्रायश्च नाहं योग्योऽस्य कर्मणः ॥८॥
दे जुगुप्सितं कर्म तदेष कर्त्तुमक्षमः । वेदकर्त्ता स्वयमहं व्यवस्थाकारको भवे ॥९॥
अकीर्त्तिर्वेदवक्तुश्च निन्द्यञ्च किमतः परम् ।
उपस्थिता च या योषिद्त्याज्या रागिणामपि ॥ १० ॥
तौ श्रुतमिति त्याज्या सर्वेषां तपस्विनाम् । महोत्सर्वैः परित्याज्या पुंश्चलीव विशेषतः
नायुःप्राणयशसां नाशिनी दुःखदायिनी । स्वकार्य्यतत्परा शश्वत्परकार्य्यविनाशिनी
नेष्ठुरानघथातिभ्यः सर्वापद्बीजरूपिणी । विद्युद्दीप्तिर्जले रेखा लोभाम्भैत्री यथाभवेत्
परद्रोहाद्यथा सम्पत्कुलटाप्रेम तत्समम् । सर्वेभ्यो हिंस्रजन्तुभ्यो विपद्बीजास्तदैव हि
पो विश्वसेत्तां संमूढो विपत्तस्य पदेपदे । त्वञ्च रूपवतीधन्या वञ्चिता कामुकैःसदा:
यूनां सम्यक्तुल्यरूपा च विषतुल्या तपस्विनाम् ।
त्वमेवाप्सरसां श्रेष्ठा सर्वदा स्थिरयौवना ॥ १६ ॥
तत्रैव कर्मयोग्यञ्च युवानं पश्य सुन्दरि । त्वं विदग्धा च योषित्सु विदग्धान्वेषणं कुरु
विदग्धाया विदग्धेनसङ्गमो गुणवान्भवेत् । जरातुरोऽहंवृद्धश्च तपस्वी वैष्णवो द्विजः
अस्वतन्त्रः पराधीनः का रतिःपुंश्चलीषु मे । अये वत्सेगच्छ शीघ्रं विहाय पितरञ्चमाम्
नाहंजाऽहञ्च जगत्स्रष्टा तस्माद्वद पिता सदा । मन्मथञ्चन्द्रमित्रञ्च जयन्तं नलकूबरम् ॥
स्वर्वैद्यौ चन्द्रतनयं दितिपुत्रांश्च सुन्दरान् ।
कामशास्त्रेषु निष्णातान् रतिकर्मविशारदान् ॥ २१ ॥
या भो यासि हि तांस्त्यक्त्वा सा विदग्धा च कामुकी ।
सदा सम्भोगविषये स्त्रियं प्रार्थयते पुमान् ॥ २२ ॥
स्त्री चेत् प्रयाति पुरुषं विपरीतं विडम्बनम् । सर्वेषाञ्चैव रत्नानां स्त्रीरत्नं दुर्लभं परम्
स्वयंप्रार्थयतेस्वामी न तुस्वामिनमेव च । योषिज्जातिर्धिक्ताश्चस्वयंयाःसमुपस्थिताः
भवेद्धि दूरं स्वल्पमूल्यं रत्नं स्वयमुपस्थितम् ।
नित्यं पुमान् स्त्रियं याति स्त्री वा याति च न प्रियम् ॥ २५ ॥

लोकाचारेषु वेदेषु न स्त्रीयातिपरप्रियम् । स्वचस्तुभुङ्क्तेयः कालेशास्त्रोक्तविधिपूर्वकम्
स पूज्यो न भवेत् पूज्यो यद्गतिः परवस्तुषु । कः कस्य शत्रुरबले निशामय जगत्त्रये
स्वेन्द्रियाः शत्रवः सर्वे शत्रुता यन्निमित्ततः । वेदोक्ताचरणे सर्वं मित्रञ्च जगतां जगत्
कृते वेदविरुद्धे च मित्रं शत्रुर्भवेद् ध्रुवम् । वेदोक्तं कृतवन्तञ्च हरिस्तुष्टो दिवानिशम् ॥

हरौ तुष्टे जगत्तुष्टं तस्मिन् रुष्टे भवो रिपुः ।
क्वास्ति कुलटाजातिः साध्वीजातिश्च कुत्र वा ॥ ३० ॥

स्वकीयाचरणात्सर्वं भवे भवति कर्मणः । स्त्रीजातिः प्रकृतेरंशा नारायणविनिर्मिता ॥
दुःशीलापुंश्चली निन्द्यासुशीला च पतिव्रता । पतिव्रतास्तु त्रिविधाःपुंश्चलीषु च योषितः
तासामेवंविधानास्ति स्वयंयातिपरप्रियम् । स्त्रीजातीनाञ्चमध्ये च कास्त्येवंकुलकज्जला
भवे यस्यैस्वयं दृष्ट्वावेशं कृत्वाप्रयातितम् । क्षोभितायदि पश्यन्ती भक्ष्यद्रव्यमसाध्यकम्
वैकुल्यान्नहि तत्साध्यं सामान्यमेव केवलम् । इत्येवमुक्त्वा जगतां विधाता विरराम च

वक्तुं समुद्यता सा च कोपप्रस्फुरिताधरा ॥ ३५ ॥

मोहिन्युवाच ।

जाने सर्वं जगद्धातश्चरितं तव साम्प्रतम् । त्वया निषेधितास्नीतिर्मनो मे न स्थिरंभवेत्

नूनं त्वयि विशिष्टश्च यावत् द्वष्टः क्षये भवान् ।
त्वद्भक्तदृष्टिमात्रेण सर्वे आराध्य विस्मृताः ॥ ३७ ॥

इदं कामाग्निना दग्धं यदा त्वमुं समुद्यता । निषिषेध च मां रम्भायद्वी मन्मथांदराम्
तदा कामसहायेन त्वत्समीपं समागता । स मधुस्तव शापेन स जगाम हतोद्यमः ॥
भद्रो गन्तुमशक्ताहं त्वया चापिमतिर्हता । सर्वाङ्गस्पर्शेव [illegible] आलम्बभूय साम्प्रतं विभो

कृपां कुरु कृपासिन्धो न मां हन्तुं त्वमर्हसि ।
तवाङ्गस्पर्शमात्रेण विज्वराहं सुनिश्चितम् ॥ ४१ ॥

करोषि जगतां धाता कुलटाजातश्च कर्मणा । सन्तो गर्वं न कुर्वन्ति कर्मसाध्याश्च जीविनः
[illegible]चित् प्रयाति यानेन वहन्ति तत्र केचन । वरं गृहाणि नृपतिः कर्मणा ददति प्रजाः ॥
[illegible]त् सिंहासनस्थश्च नृपश्चान्नश्च कारयन् । कर्मणा वाहकाः केचित् केचिद्वाहनपालकाः

करीजठरं कश्चित् संप्रयाति स्वकर्मणा । कश्चिच्छ्वव्याघ्रजठरं तथा पुत्राश्च केचन
केचित् कृत्वा हरेर्भक्तिं कर्मणा तस्य पार्षदाः ।
केचिद्वसन्ति कृमयो विष्ठायां दैवदोषतः ॥ ५६ ॥
स्वर्गं प्रयान्ति राजेन्द्राः केचिच्चस्वस्वकर्मणा । केचित्प्रयान्तिनरकं विण्मूत्रे तत्र पच्यते
र्मणा कश्चिदिन्द्रेन्द्रःसुराणां प्रवरःस्वयम् । केचित्सुरानरा केचित् केचिच्चक्षुद्रजन्तवः
केचिच्च कर्मणा विप्रा वर्णश्रेष्ठा महीतले । केचिद्भूपा वैश्यशूद्राः केचिच्चम्लेच्छजातयः
केचित्स्वकर्मणा प्राज्ञा ज्ञानेनसर्वदर्शिनः । केचिन्मूर्खाःकेचिदन्धाः साङ्गहीनाश्चकेचन
केचिच्छास्त्रं बोधयन्ति शिष्यवर्गान् स्वकर्मणा ।
केचित् पठन्ति सर्वार्थं जानन्ति गुरुवक्त्रतः ॥ ५९ ॥
भवन्ति कर्मणा केचिद्देहे स्थावरजङ्गमे । तपस्वी ब्रह्मघाती च स्वयं ब्रह्मा च कर्मणा
काचित्स्वकर्मणासाध्वीपूज्येह च परत्र च । काचिद्वेश्यातदाहारंभुंक्ते कृत्वाङ्गविक्रयम्
स्वर्वेश्याहं सुरपुरे सुरभोग्या सुपूजिता । येषामालिङ्गनेनैव कर्मणां खण्डनं भवेत् ॥
मनः स्वभावबीजञ्च स्वभावः कर्मबीजकः । तत्कर्म फलबीजञ्च सर्वेषां जनको हरिः
फलं ददाति नियतं कर्मद्वारा विभुः स्वयम् । सर्वेभ्यो बलवानित्यं कर्मरूपी जनार्दनः
कुतो हेतोर्निन्दिताऽहं त्वयैव भर्त्सिता कथम् ।
जगत्स्रष्टुरीश्वरस्य पादाब्जं द्रष्टुमागता ॥ ६३ ॥
स्वप्ने यस्य पदद्वन्द्वं न हि पश्यन्तियोगिनः । तमीश्वरंपतिं कर्तुमिच्छया स्वयमागता
गत्वा हि कस्यचित्स्थानमस्पृश्येहपरत्र च । कस्यचिन्पादरजसापवित्रामानितयोषितः
इत्युक्त्वा मोहिनीशीघ्रं गत्वोपास हरेःपुरः । स्वयं विधाता जगताञ्चकम्पेकुत्स्थामपाद्
सस्मिता वक्रनयना कामभावं चकार ह । स्वाङ्गञ्च दर्शयामास कामबाणप्रपीडिता ॥
एतस्मिन्नन्तरे कामः सर्वज्ञः सर्वयोगवित् । आविर्भूय पञ्चबाणान्निचिक्षेप च ब्रह्मणि
संमोहनं समुद्वेगं वीजस्तम्भितकारणम् । उन्मत्तबीजं ज्वलदं शश्वच्चेतनहारकम् ॥
एतान् प्रक्षिप्य मदनोऽप्यन्तरिक्षस्थितः स्वयम् ।
किङ्करान् प्रेषयामास संमोहाय विधेर्मुदा ॥ ६४ ॥

इत्युक्त्वा मोहिनी सद्यो जगत्स्रष्टुश्च ब्रह्मणः ।
चिचकर्ष वरं वस्त्रं सस्मिता कामविह्वला ॥ ११ ॥
विज्ञाय समयं धाता तामुवाच भयातुरः । पीयूषतुल्यं वचनं वरं विनयपूर्वकम् ॥ १२ ॥

ब्रह्मोवाच ।

शृणु मोहिनि मद्वाक्यं सत्यं सारं हितं स्फुटम् ।
न कुरु त्वञ्च त्रैलोक्ये स्त्रीजातीनामपत्रपाम् ॥१३॥
त्यज मामम्बिके पुत्रं वृद्धं निष्काममेव च । त्वत्कर्मयोग्यरसिकं युवानं पश्य सुस्मिते
निषेकाल्लभते पत्नी शुभमर्त्तुः शुभाशुभम् । मन्त्रशिल्पमपत्यञ्च सर्वमेतन्न यत्नतः ॥१५॥
त्वया सह मम रते निबन्धो नास्ति सुव्रते । ध्रुवं मद्वला यत् कर्म सर्वं दैवनिबन्धकम्
इत्युक्तवन्तं ब्रह्माणं स्मरन्तं मत्पदाम्बुजम् । चिचकर्ष पुनर्वेश्या कामेन हतचेतना ॥१७॥
एतस्मिन्नन्तरे शीघ्रं स्थानं तत् सुमनोहरम् । आजग्मुर्मुनयः सर्वे ज्वलन्तो ब्रह्मतेजसा
अत्रिः पुलस्त्यः पुलहो वशिष्ठः क्रतुरङ्गिराः । भृगुर्मरीचिः कपिलो वोढुः पञ्चशिखोरुचिः
आसुरिश्च प्रचेताश्च स्वयं शुक्रो बृहस्पतिः । उतथ्यः करथः कण्वः कश्यपो गौतमस्तथा
सनकश्च सनन्दश्च कर्दमश्च सनातनः । सनत्कुमारो भगवान् योगिनां परमो गुरुः ॥
शातातपः पिप्पलश्च शङ्कुः शङ्कः पराशरः । मार्कण्डेयो लोमशश्च मृकण्डुश्च्यवनस्तथा
दुर्वासाश्च जरत्कारुरास्तीकश्च विभाण्डकः । ऋष्यशृङ्गो भरद्वाजो वामदेवश्च कौशिकः
दृष्ट्वैतांश्च तपोनिष्ठानागतांश्च मुनीश्वरान् । तत्याज मोहिनी शीघ्रं धातारं कमलोद्भवम्
तत्रोवास जगद्धाता तद्वामपार्श्वतश्च सा । प्रणेमुर्मुनयस्तत्र भक्तिनम्रात्मकन्धराः ॥२५
आशिषं युयुजे ब्रह्मा वासयामास तान् विभुः । तेषु मध्ये भ्रमश्यालयधातारास्तु चन्द्रमा
पप्रच्छुर्मुनयो देवं कथमेषा तवान्तिके । स्वर्वेश्यानाञ्च प्रवरा मोहिनीत्येवमेव च ॥२६॥
श्रुत्वा मुनीनां वचनमुवाच तान् प्रजापतिः । स्त्रीजातीनाञ्च वचनं लज्जाच्छादनमेव च

ब्रह्मोवाच ।

अपूर्वं नृत्यगानञ्च चिरं कृत्वा शुभावहा । उपासैर्य परिश्रान्ता यथा कन्या पितुः पुरः
इत्युक्त्वा जगतां धाता जहास मुनिसंसदि । जहसुर्मुनयः सर्वे सर्वज्ञास्तत्र राधिके ॥

वं रहस्यं विज्ञाय जगत्स्रष्टुश्च मानसम् । सचुकोप कुलटा हास्यव्याजेन संसदि
सर्वाङ्गकम्पमाना सा कुलटा कुटिलानना । रक्तपङ्कजनेत्रा च कोपप्रस्फुरिताधरा ॥३२॥

उत्थाय च सभामध्ये तेषाञ्च पुरतः स्थिता ।
संबोध्योवाच ब्रह्माणं मृत्युकन्या यथा रुषा ॥ ३३ ॥

मोहिन्युवाच ।

अये ब्रह्मन् जगन्नाथ वेदकर्ता त्वमेव च । किं वा वेदप्रणिहितं कर्म किं तद्विपर्य्ययम् ॥

विचारं मनसा स्वेन कुरु वेदविदां गुरो ! ।
स्वकन्यायां यत्स्पृहा स कथं हससि नर्त्तकीम् ॥ ३५ ॥

निर्मिताहमीश्वरेण स्वर्वेश्या सर्वगामिनी । सतां कर्मविरुद्धं यत्तदत्यन्तविडम्बनम् ॥

दासीतुल्यां विनीताञ्च दैवेन शरणागताम् ।
यतो हससि गर्वेण ततोऽपूज्यो भवाचिरम् ॥ ३७ ॥

अचिराद्दर्पभङ्गं ते करिष्यति हरिः स्वयम् । निबोध वचनं ब्रह्मन्वेश्यायाश्च तु साम्प्रतम्

तवैव वचनं स्तोत्रं गृह्णाति यो नरः सदा ।
भविता तस्य विघ्नश्च स यास्यत्युपहास्यताम् ॥ ३९ ॥

भविता वार्षिकी पूजा देवतानां युगे युगे ।
तव मात्पाश्च संकान्त्यां न भविष्यति सा पुनः ॥ ४० ॥

कल्पान्तरेऽत्र कल्पे वा देहे देहान्तरेऽत्र वा । पुनः पूजा न भविता वा गतास्ता गतैव च
इत्युक्त्वा मोहिनी शीघ्रं जगाम मदनालयम् । तेन सार्द्धं रतिं कृत्वा बभूव विज्वरा पुनः
पश्चात् सा चेतनां प्राप्य विललाप भृशं पुनः । अयं कथं मया शप्तो जगद्विधिरतिप्रियः
स्वर्वेश्यायां गतायाञ्च मुनयो दुःखिता भृशम् । स्वयंविधाता जगताञ्चकम्पे नतकन्धरः
उपायं मुनयस्तस्मै ददुः कल्याणकारिणः । शरणं व्रज वैकुण्ठमित्युक्त्वा ते गृहान् ययुः
ब्रह्मा जगाम शरणंमम मूर्त्यन्तरं परम् । शान्तं तं कमलाकान्तं श्यामं नारायणाभिधम्
गत्वा विषण्णवदनः प्रणम्य च चतुर्भुजम् । तत्रोवास जगत्कर्त्ता नातिदूरे समीपतः ॥
रहस्यं कथयामास शुष्ककण्ठोष्ठतालुकः । दीनबन्धुं दयासिन्धुं विपत्तारणकारणम् ॥

दिव्यैः स्तोत्रैश्च तुष्टाव निगूढमतिसुन्दरैः । स्तुत्वोवास वरैः स्तोत्रैः सर्वेषामश्रुतैरहो॥
तदनन्तरयोरग्रे भक्त्या शतमुखः स्वयम् । जगद्विधौ समायाञ्च तत्र तिष्ठति तत्क्षणे ॥
आजगामातिब्रह्माण्डाधिपो ब्रह्मा हरेःपुरः । सहस्रवदनःश्रीमान् भक्त्या नम्रात्मकन्धरः
स्तुत्वोवास वरैः स्तोत्रैः सर्वेषामश्रुतैरहो । तत्र पप्रच्छसर्वेषां ब्रह्माण्डानाञ्च ब्रह्मणाम्
वार्तां विपयिणाञ्चैव सुराणाञ्च क्रमेण च ॥ ६६ ॥
चतुर्मुखस्य तान् दृष्ट्वा दर्पभङ्गो बभूव ह । आत्मानं विष्णुसदृशं मन्यमानस्य दर्पतः ॥
अन्यान् स दर्शयामास ब्रह्माण्डस्थान् विधीन् हरिः ।
दृष्ट्वा च कृपया तत्र मृततुल्यं चतुर्मुखम् ॥ ७१ ॥
यावन्ति गात्रलोमानि सन्ति नारायणस्य मे ।
तत्प्रमाणाश्च ब्रह्माण्डा ब्रह्मणः सन्ति सन्ततम् ॥ ७२ ॥
नारायणं प्रणम्याशु जग्मुस्ते स्वालयं प्रति । स मेने विधिरात्मानमत्यल्पं विपयाधिपम्
पप्रच्छ प्रणते विष्णुर्लज्जानम्रंचतुर्मुखम् । वद तत् किमिदं दृष्टं स्वप्नयद्रूपसाधुना ॥ ७४
नारायणवचः श्रुत्वा विधिरित्युक्तवांस्तदा । भूतं भव्यं भविष्यञ्च तव मायासमुद्भवम्
इत्येवमुक्त्वा स विधिस्तस्थौ संसदि लज्जया ।
सर्वान्तर्यामी भगवान् तस्योपायं विनिर्ममे ॥ ७६ ॥

इति श्री ब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
मोहिनीशापब्रह्मदर्पभङ्गो नाम त्रयस्त्रिंशोऽध्यायः ।

---

## चतुस्त्रिंशोऽध्यायः

### जाह्नव्या जन्मवृत्तान्तः ।

श्रीकृष्ण उवाच ।

एतस्मिन्नन्तरे तत्र शङ्करः समुपस्थितः । सस्मितो वृषभेन्द्रस्थो विभूतिभूषणः स्वयम्
व्याघ्रचर्माम्बरधरो नागयज्ञोपवीतकः । स्वर्णाकारजटाभारमर्धचन्द्रञ्च संदधत् ॥ २ ॥

त्रिशूलपट्टिशकरो विप्रन् नन्दपाद्गुणावम् । सद्रत्नसारनिर्माणयन्त्रकरो मुदा ॥ ७॥
पाद्मनाद्यपरागमु गगिनघाम्भपरम्परः । प्रणम्य कमलाकान्तं वामे गोपाल भक्तितः ॥
ब्रह्मपुर्गवः सर्वे सुराः शक्रादयस्तथा । आदित्या वसवो रुद्रा मनवः सिद्धचारणाः
पुलकाञ्चितसर्वाङ्गाश्चक्रुः पुरुषोत्तमम् । प्रणम्य तं शिवे सर्वे सुराश्च नम्रकन्धराः ॥
एतस्मिन्नन्तरे तत्र सङ्गीतं शङ्करो जगौ । कृष्णाऽनीय सुमाल्यश्च स्वरयन्त्रसमन्वितः ॥

भावयंश्च गुणाख्यानं रासरसवन्धि सुन्दरम् ।

समयोचितरागेण मनोमोहनकारिणा ॥ ८ ॥

यन्त्र कण्ठेकतानेन यैकमानेन चारुणा । पञ्चभेदविरामेण गुरुणा लघुना क्रमात् ॥ ९ ॥
ग्रामकेनातिदीर्घेण मन्देन मधुरेण च । भवेति दुर्लभं रूपं प्रीत्या स्वेन विनिर्मितम् ॥१०
पुलकाञ्चितसर्वाङ्गः साश्रुनेत्रः पुनः पुनः । तदैव श्रुतिमात्रेण मूर्च्छां प्राप्य विचेतनाः ।
बभूव रुद्ररूपाश्च मुनयः पुरतः प्रिये । द्रवरूपाः सुराः सर्वे विधातृहरिपार्षदाः ॥ १२ ॥
नारायणश्च लक्ष्मीश्च गायकश्च शिवःस्वयम् । जलपूर्णञ्च वैकुण्ठं दृष्ट्वा ब्रह्मोऽहमीश्वरि
गत्वा मूर्तीर्विनिर्माय सर्वाश्च तादृशीरिति । तन्वस्वरूपास्तद्रूपाश्च तन्वस्वयशनभूषणा
तद्गुणमायास्तन्मनस्कास्तत्तद्विषयमानसाः । स्थानं निर्माय परितो वैकुण्ठस्य चतुर्दिशि
तदधिष्ठातृदेवी च आजगाम स्वमालयम् । शरीरजा सुराणां सा बभूव सुरनिम्नगा ।

मुक्तिदा च मुमुक्षूणां भक्तानां हरिभक्तिदा ॥ १६ ॥

कोटिजन्मार्जितं पापं विविधं पापिनामहो । यस्याश्च स्पर्शवायोश्चसम्पर्केणविनश्यति
किं वा न जाने प्राणेशि स्पर्शदर्शनयोःफलम् । किमुतस्नानजन्यञ्चकथयामि निरूपणम्
सर्वतीर्थात्परं पृथ्व्यां पुष्करं परिकीर्त्तितम् । वेदोक्तञ्चतदेवास्याःकलांनार्हतिषोडशीम्
भगीरथेन चानीता तेन भागीरथीस्मृता । भामागता स्रोतसोऽशाद्गङ्गा तेन प्रकीर्त्तिता
जानुद्वारा पुरा दत्ता जह्नुना तोयकोपतः । तस्यकन्यास्वरूपा सा जाह्नवीतेनकीर्त्तिता

भीष्मः स्वयं वसुर्जातस्तस्यां सा तेन भीष्मसूः ॥ २२ ॥

... ...मि. स्वर्गं पृथिवीमतलं तथा । ममाज्ञया च गच्छन्ती तेन त्रिपथगामिनी
... ... मन्दाकिनीस्मृता । योजनायुतविस्तीर्णाप्रस्थेचयोजनास्मृता

क्षीरतुल्यजला शश्वदत्युच्चतुङ्गतरङ्गिणी । वैकुण्ठाद् ब्रह्मलोकञ्च ततः स्वर्गं समागता ॥
स्वर्गाद्धिमाद्रिमार्गेण पृथिवीमागता मुदा । सा धारालकनन्दाख्या स्वर्णोदेनमिश्रिता
शुद्धस्फटिकसङ्काशा बहुवेगवती सती । पापिनां पापशुष्केन्धं दग्धुं पावकरूपिणी ॥
अतो सागरवंशेभ्यो निर्वाणमुक्तिदायिनी । वैकुण्ठगामिनी सा च सोपानरूपिणी धरा

अतोऽपि मृत्युसमये सतां पुण्यस्वरूपिणाम् ।
धात्री पात्री च संन्यस्य मुखे तोयं प्रदीयते ॥ २६ ॥

गङ्गासोपानमारुह्य सन्तो यान्ति निरामयम् । आब्रह्मलोकं संलंघ्य रथरूपाश्च निरापदः
दैवात्पुरा प्राक्तनेन मग्ने चेत् कृतपातकैः । लोमप्रमाणवर्षञ्च मोदन्ते हरिमन्दिरे ॥३१॥
ततो भोगो भवेत्तेषां निश्चितं पापपुण्ययोः । अति स्वल्पेन कालेन कालव्यूहश्च विभ्रताम्
ततःपुण्यवतां गेहे लब्ध्वा जन्म च भारते । संप्राप्य निश्चलांभक्तिं भवन्ति हरिरूपिणः
मृतद्विजानां देहाश्च दैवाज्जाह्न्वा वहन्ति चेत् । पद्मप्रमाणवर्षञ्च तेषाञ्च नरके स्थितिः ॥
ततस्तेषाञ्च साहाय्यं करोति हरिरूपिणी । ददाति मुक्तिं तेभ्योऽपि क्रमेण च कृपामयी

जन्मपुण्यवतां गेहे कारयित्वा च भारते ।
स्थलं ददाति वैकुण्ठे निश्चितं जन्मभिस्त्रिभिः ॥ ३६ ॥
यात्रां कृत्वा तु यः शुद्धो स्नातुं याति सुरेश्वरीम् ।
पद्मप्रमाणवर्षञ्च वैकुण्ठे मोदते ध्रुवम् ॥ ३७ ॥

गङ्गां प्राप्यानुषङ्गेण स्नातिचेत् समलो नरः । मुच्यते सर्वपापेभ्यः पुनर्यदि न लिप्यते
कलौ पञ्चसहस्राब्दं स्थितिस्तस्याश्च भारते । तस्याञ्च विद्यमानायां कःप्रभावःकलेरहो
कलौ दशसहस्राणि वर्षाणि प्रतिमा मम । तिष्ठन्ति पुराणानि प्रभावस्तत्र कः कलेः

अतलं याति या,धारा सा च भोगवती स्मृता ।
पयःफेननिभा शश्वदतिवेगवती सदा ॥ ४१ ॥

आकरामूल्यरत्नानां मणीन्द्राणाञ्च सन्ततम् । नागकन्याश्चतत्तीरेक्रीडन्ति स्थिरयौवनाः
स्वयं देवी च वैकुण्ठे चेष्टयित्वा च सन्ततम् । सहस्रयोजनायस्थे दैर्घ्यं च लक्षयोजना
अस्या विनाशः प्रलये नास्त्येव दुहितुर्मम । नानारत्नाकरं दिव्यं तत्तीरं सुमनोहरम् ॥

इत्येवं कथितं सर्वं जाह्नवीजन्मपुण्यदम् । ब्रह्मणश्च प्रतीकारो माहिनीशापतः शृणु
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
जाह्नवीजन्मप्रस्तावो नाम चतुस्त्रिंशोऽध्यायः ।

---

## पञ्चत्रिंशोऽध्यायः

### ब्रह्मणो गोलोकगमनम्

श्रीकृष्ण उवाच ।

नारायणश्च ब्रह्माणमुवाच कृपया पुनः । दृष्ट्वा गङ्गाञ्च सर्वेषां मम मायाञ्च मेनिरे ॥ १ ॥

श्रीनारायण उवाच ।

उत्तिष्ठ गच्छ भद्रन्ते भविष्यति चतुर्मुख । अत्र स्नात्वाभिशप्तस्त्वंपूतो भव ममाज्ञया

त्वं चेत् सत्यं स्वयं पूतः स्पर्शं वाञ्छन्ति तानि च ।
वैष्णवेशस्य तीर्थानि सर्वाणि सततं मुने ॥ ३ ॥

तथापि शापमुक्तस्त्वमत्र प्रकृतिदेहनात् । मद्भक्ताश्च सर्वेषां पापबीजममङ्गलम् ॥ ४ ॥

शीघ्रं त्वं गच्छ गोलोकं ममालयपरात्परम् ।
प्रत्यंशो मद्गुल्दां तत्र प्राप्स्यसि भारतीम् ॥ ५ ॥

प्रकृतिं भज कल्याणसृष्टिबीजस्वरूपिणीम् । अहो कल्पान्तपर्यन्तं तपस्तप्तं त्वयाधुना
तव मन्त्रं न गृह्णन्ति केऽपि विप्राभिशापतः । यज्ञान्यदेवपूजायां तव पूजा भविष्यति ॥
त्वमेव जगतां धाता ध्यानमायामश्च पोषितः । सर्वकर्मा च पूजा न सर्वदेवेषु सर्वतः ॥
तदा ममाज्ञया ब्रह्मन् स्नात्वा च जाह्नवीजले । शीघ्रं जगाम गोलोकं संप्रणम्य जगद्गुरुः
ते देवा मुनयः सर्वे प्रजग्मुः स्वालयं मुदा । सुनिर्मलं मम यशो गायन्तश्च पुनः पुनः ।
विधिरागत्य गोलोकं संप्राप्य भारतीसतीम् । सर्वविद्याधिदेवीं तां ब्रह्मशास्त्रविनिर्मिताम्
वागीश्वरीञ्च संप्राप्य ब्रह्मा प्रमुदितः स्वयम् । कालान्तरामात्म्ययागमनुमेवं विभुः

तत आगत्य मां नत्वा प्राप्य त्रैलोक्यमोहिनीम् ।
क्रीडां चकार भगवान् स्थाने स्थानेऽतिनिर्जने ॥ १३ ॥
रतिं चिरतरं कृत्वा विरराम स्वयं विधिः । वाणीश्वरीमुवाचेदं त्वं चैव ब्रह्मा च कर्मणा
काचित् स्वकर्मणा साध्वी पूज्या च स्थिरयौवना ।
तथैव कर्मयोगश्च युवानं पश्य सुन्दरि ॥ १५ ॥
विद्याधाया विदग्धेन सङ्गमो गुणवान् भवेत् । जरातुरोऽहंवृद्धस्तपस्वी वैष्णवो द्विजः
अस्वतन्त्रः पराधीनः का रतिः पुंश्चलीषु मे । आजगाम ब्रह्मलोकं पुनरेव निजालयम् ॥
ददर्श ब्रह्मलोकस्थस्तां देवीं कौतुकान्विताम् । अतीवसुन्दरीरम्यांशुभ्रवर्णांशुसस्मिताम्
शरच्चन्द्रांशुवदनां शरत्पङ्कजलोचनाम् । पक्वबिम्बप्रभामुष्ट दीप्तौष्ठाधरपल्लवाम् ॥ १६ ॥
मुक्तापङ्क्तिविनिन्द्यैकदन्तपङ्क्तिमनोहराम् । रत्नकेयूरवलयरत्ननूपुरशोभिताम् ॥ २० ॥
रत्नकुण्डलयुग्मेन कर्णमूलविराजिताम् । रत्नेन्द्रसारहारेण वक्षःस्थलसमुज्ज्वलाम् ॥ २१
वह्निशुद्धांशुकं सूक्ष्मं बिभ्रतीं नवयौवनाम् । अतीव कमनीयाञ्च पीनश्रोणिपयोधराम् ॥
वीणापुस्तकहस्ताञ्च व्याख्यामुद्राकरां वराम् । तेन निर्मन्थनं कृत्वा चक्रुः परममङ्गलम्
पुरीं प्रवेशयामासुर्ब्रह्माणं भारतीं मुदा । ब्रह्मा तया सह क्रीडां चकार स दिवानिशम्
अतीव सुखसम्भोगे निमग्नः सततं मुदा । गूढं सर्वपुराणेषु किं पुनः श्रोतुमिच्छसि ॥

श्रीनारायण उवाच ।

प्राणेशवचनं श्रुत्वा प्रहस्य परमेश्वरी । भूयोऽपि परिपप्रच्छ कौतुकान्मानसं पुरा ॥ २६

श्रीराधिकोवाच ।

ब्रह्मा कथं न जग्राह वेश्यां स्वयमुपस्थिताम् ।
न कर्मक्षेत्रे वहति फलदाता च कर्मणाम् ॥ २७ ॥
उपस्थितायास्त्यागे च महान् दोषो हि योषितः ।
ज्ञात्वा देव विधाता स कथं तत्याज मोहिनीं ॥ २८ ॥

श्रीनारायण उवाच ।

राधिकावचनं श्रुत्वा प्रहस्य मधुसूदनः । पाद्मकल्पस्य वृत्तान्तमुवाच परमेश्वरीम् ॥

क्षणेन चेतनां प्राप्य ददर्शाग्रे च कन्यकाम् ।
तां संभोक्तुं मनश्चक्रे सा दुद्राव भिया सती ॥ ४७ ॥
दृष्ट्वा पश्चाच्च पितरं धावन्तं हृतचेतनम् ।
जगाम शरणं शीघ्रं भ्रातॄणाञ्च तपस्विनाम् ॥ ४८ ॥
तेषां समीपे संस्थाप्य समूचुः पितरं क्रुधा । हितं तथ्यञ्च वेदोक्तं नीतिसारं परंवचः ॥

ऋषय ऊचुः ।

ो किमेतज्जनककर्मेतेति विगर्हितम् । मोचानां चरितं यत्तत्करोषि त्वं जगद्विधे ॥
यन्ति सततं सन्तः प्रसूमिव परस्त्रियम् । ये ते सर्वत्र पूज्याश्च परत्रेह जितेन्द्रियाः ॥
त्वं स्वयं वेदकर्ता च कन्यां संभोक्तुमिच्छसि ।
कन्या च मातृवर्गेषु प्रविष्टा च श्रुतौ श्रुता ॥ ५२ ॥
रोः पत्नी राजपत्नी विप्रपत्नीच या सती । पत्नीच भ्रातृसुतयोर्मित्र पत्नीच तत्प्रसूः
प्रसूः पित्रोस्तथा भ्रातुः पत्नी श्वश्रूः स्वकन्यकाः ।
जननी तत्सपत्नी च भगिनी सुरभी तथा ॥ ५५ ॥
ग्राभीरसुतपत्नीच धात्रिकाऽन्नप्रदायिका । गर्भधात्री स्वनाभ्याच्च भयात्रातुश्च कामिनी
ता वेदप्रणीताश्च सर्वेषां मातरः स्मृताः । एतास्वपिच सर्वासु न्यूनता नास्ति कासु च
कन्यादाताऽन्नदाता च ज्ञानदाताऽभयप्रदः ।
जन्मदो मन्त्रदो ज्येष्ठभ्राता च पितरः स्मृताः ॥ ५७ ॥
एता वदन्ति ये मूढा य एतान् जनकानपि ।
पच्यन्ते नरके ते च यावद्वै ब्रह्मणो वयः ॥ ५८ ॥
ग्रान्धकूपे संस्थाप्य दूरतो यमकिङ्कराः । कुर्वन्ति ताडनं शश्वत्पुरीषं पाययन्ति च ॥
त्वमेव विश्वकर्ता च शास्ता वै शमनस्य च ।
स्वयं विधाता जगतां तेन गृह्णासि कन्यकाम् ॥ ६० ॥
अस्माकं पुरतो दूरं गच्छ कामार्तमानस । न कुर्मो भस्मसात्कर्तुं शक्ताश्चजनकं वयम्
गुरोर्दोषसहस्राणि क्षन्तुमर्हन्ति पण्डिताः । सर्वज्ञं ते विनिन्दन्ति नीतिज्ञाःस्वगुरुंपिता

सुरूपं यदि सर्वेभ्यो ब्रह्मन् निन्दां गुरुम् । साधवश्चैव निन्दन्ति प्रणमन्ति स्वमस्तकम् ।
ये निन्दन्ति च निन्दन्ति गुरुमिष्टं सुरात्परम् ।
पच्यन्ते ते कुम्भीपाके यावच्चन्द्रदिवाकरौ ॥ ६४ ॥
दुर्लभं भुञ्जते नित्यं क्षुधिता यमताडनैः । सर्वप्रमाणकीटैश्च दंशिताश्च दिवानिशम् ॥६५
इत्येवमुक्त्वा मुनयः प्रणेमुस्तत्पदाम्बुजम् । सर्वं भवति दैवेन प्रशान्तमनसा ध्रुवम् ॥
उद्युक्ता मुनयः सर्वे बभूवुश्च स्वकर्मणि । ब्रह्मा शरीरं सन्त्यक्तुं योगेन च समुद्यतः ॥
योगेन भित्त्वा षट्चक्रं सर्वान् प्राणानिलांश्च च ।
ब्रह्मरन्ध्रं समानीय तत्याज स्वेन धर्मणा ॥ ६८ ॥
मनसा श्रीहरिं स्मृत्वा नमस्कारं चकार ह । न मे मनः परब्रह्मणि भविता लीनमीश्वर ॥
प्राणत्यागात् परं दुःखमपराद्धं यशस्विनाम् ।
बभूव हृदि हस्त्वेकं प्राप्ता लीनस्य ब्रह्मणि ॥ ७० ॥
कन्या तातं मृतं दृष्ट्वा विलप्य च भृशं मुहुः । योगेन देहं तत्याज सा प्रलीना च ब्रह्मणि ॥
मृतं तातञ्च भगिनीं दृष्ट्वा च मुनिपुङ्गवाः । सनकः श्रीहरिं कोपात् स्वात्मारामं विलप्य च
नारायणो महांशश्च कृपयागत्य सत्वरम् । ब्रह्माणं जीवयामास ब्रह्मज्ञानात् सुतांश्च ताम्
ब्रह्मा पुरो हरिं दृष्ट्वा वरं वव्रे स्ववाञ्छितम् ।
भक्तिं त्वच्चरणे शश्वदिच्छाम्यनपायिनीम् ॥ ७४ ॥
ब्रह्माणं विरसं दृष्ट्वा समुवाच कृपानिधिः । प्रबोधवचनं सत्यं नीतिसारं मनोहरम् ॥७५

श्रीनारायण उवाच ।

शृणु ब्रह्मन् प्रवक्ष्येऽहं सुखमुत्तोल्य साम्प्रतम् ।
त्यज लज्जां जगन्नाथ हृदयज्वररूपिणीम् ॥ ७६ ॥
सत्कीर्तिरपकीर्तिर्वा सुप्रतिष्ठाप्युपद्रवः । क्षुद्राणाञ्चैव महतां भवन्त्येव स्वकर्मणा ॥
सर्वेषामपि सर्वेभ्यः स्वकर्म बलवत्तरम् । तस्मात् सन्तः प्रकुर्वन्ति नित्यं सत्कर्म संततम्
केचित् कुर्वन्ति निर्मूलं सर्वेषामपि कर्मणाम् । कृतं कर्म परं भुक्त्वा हरिपादाब्जचेतसः ॥
७८ [illegible] लज्जा भवेद् ध्रुवम् । सुकर्मणः सुप्रतिष्ठा सर्वत्र निर्मलं यशः ॥

कालेन रजसा देहो चलरूपं शुभाशुभम् । कीर्तिर्वा त्रिगुणा चैव मोहश्चापयशो विधे ॥
ऋणव्रणापवादाश्च जन्तूनां यान्ति कालतः । महतां तौ [illegible] पूर्वोक्तौ नेतरश्च कदाचन ॥

सदापकीर्तिर्वसति परस्त्रीषु च वस्तुषु ।
तस्मात्तेनैव गृह्णन्ति सन्तः स्वक्लेशकारणे ॥ ८३ ॥

स्मर मामन्तरे ब्रह्मे मदीयं विषयं कुरु । अतस्तेन मनो लोलं भविता परवस्तुषु ॥८४
योषिद्रूपा च मे माया सर्वेषां मोहकारिणी । लीलया कुरुतेमोहं स्वात्मारामस्य सन्ततम्
नानामुद्राश्रये देहो रागिणं सन्ततं रतिः । स्तनाभिधे मांसपिण्डेऽधरे लालालये शुचौ ॥
श्रोणिघघनस्तनं तासां कामदेवालयं सदा । तस्मात्तेनहि पश्यन्ति सन्तोहि धर्मभीरवः

को धर्मः किं यशस्तेषां का प्रतिष्ठा च किं तपः ।
किं बुद्धिर्विद्या दानञ्च परस्त्रीषु च यन्मनः ॥ ८८ ॥

इहाप्ययशो दुःखं नरकेषु परत्र च । वासः प्रहारस्तैर्वाञ्च ताडनैः कृमिभक्षणैः ॥८९॥
दुःखर्याजं सुखं मत्वा मूढाश्च दैवदोषतः । परस्त्रीसेवनं प्रीत्या कुर्वन्ति सन्ततं मुदा ॥
उत्तमा मत्पदाम्भोजं सत् कर्म मध्यमा सदा । स्मरन्ति शश्वदधमाः परस्त्रीसेवनंमुदा
विपत्तिः सन्ततं तस्य परवस्तुषु यन्मनः । विशेषतः परस्त्रीषु सुवर्णेषु च भूमिषु ॥९२
दैवात्परस्त्रियं दृष्ट्वा विरमेद्यो हरिं स्मरन् । दृष्ट्वा परसुवर्णञ्च हस्तप्रक्षालनाच्छुचिः ॥
सन्तो नैव संसक्ताः सन्तः स्वस्त्रीषु कामतः । यक्ष्मव्याधिज्ञानहानिलोकनिन्दाभयेनच

तपस्विनस्तपस्यायां शास्त्रचिन्तासु पण्डिताः ।
योगिनो योगचिन्तासु वेदार्थेषु च वैदिकाः ॥ ९५ ॥

साध्व्यश्च पतिसेवासु गृहस्था गृहकर्मसु । विषयेषु विषयिणो मद्भक्ता मम सेवने ॥९६
धने नियुक्ता धनेषु सभासु च प्रशंसिताः । वेदोक्ताचरणेनैव तद्विरुद्धेन निन्दिताः ॥९७

सर्वे नित्यं प्रशंसन्ति शश्वत्सन्मार्गगामिनम् ।
दाम्भिका अपि निन्दन्ति कुवर्त्मगामिनं विधे ॥ ९८ ॥

भविता [illegible] परस्त्रीषु परवस्तुषु ते मनः । अद्य प्रभृति जीवन्तं निर्विघ्नं मद्वरेण च ॥९९॥
मदीयविषये ब्रह्मे मयादत्तं कुरु प्रियम् । अन्तरा मत्पदाम्भोजचिन्तां विघ्नविनाशिनीम्

कन्या भवतु मे ब्रह्मन् कामदेवस्य कामिनी। रतिर्नाम परित्याज्या रत्यधिष्ठातृदेवता॥
इत्येवमुक्त्वा ब्रह्माणमाश्वास्य कमलापतिः। जगाम नित्यं वैकुण्ठं वृन्दावनविनोदकः॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे राधाकृष्णसंवादो नाम पञ्चत्रिंशोऽध्यायः।

## षट्त्रिंशोऽध्यायः

### हरदर्पभङ्गवर्णनम्

श्रीराधिकोवाच।

एतेन नियमेनैव ब्रह्मा तत्याज मोहिनीम्। कथं स कुलटाशापादपूज्यः संबभूव ह॥१॥
कथं तस्य दर्पभङ्गञ्चकार कमलापतिः। कथयस्व सर्वबीजं सर्वेषामीश्वरः स्वयम्॥२॥

श्रीनारायण उवाच।

रासेश्वरीवचः श्रुत्वा प्रहस्य रसिकेश्वरः। निगूढमितिहासञ्च तां वक्तुमुपचक्रमे॥३॥

श्रीकृष्ण उवाच।

ब्रह्मा चिरं तपस्तप्त्वा मत्तो लब्ध्वा वरं वरम्।
सृष्टिं नानाविधां कृत्वा विधाता स बभूव ह॥४॥
तपसां फलदाता च सर्वेषां शास्तिदः प्रभुः। आत्मानमीश्वरं ज्ञात्वा महागर्वो बभूव ह
ब्रह्माण्डेषु च सर्वेषु गर्वपर्वतमुन्नतिः। इति मत्वा ब्रह्मणश्च दर्पभङ्गः कृतो मया॥६॥
येषां येषां भवेद्दर्पो ब्रह्माण्डेषु परात्परः। विधाय सर्वं सर्वात्मा तेषां शास्ताहमेव च॥७॥
प्रथमे ब्रह्मणो गर्वो मया चूर्णीकृतः शुभे। शङ्करस्य च पार्वत्याश्चन्द्रस्याथ रवेस्तथा॥
वह्नेर्दुर्वाससश्चैव तथा धन्वन्तरेः प्रिये। क्रमेण दर्पभङ्गञ्च कथयामि निशामय॥९॥
शुद्राणां भक्तानाञ्चैव देवानां भवेत् प्रिये। एवंविधमहं तेषां चूर्णीभूतं करोमि च॥

श्रीनारायण उवाच।

श्रीकृष्णस्य वचः श्रुत्वा शुष्ककण्ठोष्ठतालुका।

पप्रच्छ राधा यत्नेन सन्त्रस्ता भयविह्वला ॥ ११ ॥

श्रीराधिकोवाच ।

कस्य केन प्रभावेण महादर्पो बभूव ह । त्वया केन प्रभावेण तस्य भङ्गः कृतः पुरा ॥१२
कथयस्व प्राणनाथ सर्वेषां दर्पभञ्जन । दर्पहाभयद प्राणदानैककारणेश्वर ॥ १३ ॥

श्रीकृष्ण उवाच ।

येन भूतं गर्वचूर्णं श्रुतं त्रिजगतां विधेः । अन्येषां श्रूयतां राधे व्यासेन कथयामि ते ॥
स्वयं शिवो महेशश्च संहर्ता जगताञ्च यः । तेजसा मत्समः पूर्णो ज्ञानेन च गुणेन च
ध्यायन्ति योगिनो यं च योगीन्द्राणां गुरोर्गुरुः ।
ज्ञानानन्दस्वरूपोऽयं तस्याख्यानं शृणु प्रिये ॥ १६ ॥
युगलक्षसहस्राणि तपस्तप्त्वा दिवानिशम् । भूत्वा च मत्कलापूर्णो बभूव मत्समोऽपि प्रभुः
तपसा तेजसा शश्वत्तेजोराशिर्बभूव ह । सूर्यकोटिप्रभायश्च भक्तानां कल्पपादपः ॥१८
ध्यायं ध्यायञ्च योगीन्द्रास्तत्तेजो बहुकालतः । तदन्तरे च पश्यन्ति स्वरूपमतिसुन्दरम्
शुद्धस्फटिकसङ्काशं पञ्चवक्त्रं त्रिलोचनम् । त्रिशूलपट्टिशधरं व्याघ्रचर्माम्बरं परम् ॥२०
जपन्तं स्वात्मनात्मानं श्वेताब्जबीजमालया । ईषद्धास्यप्रसन्नास्यं चन्द्रचूडं परात्परम्
स्वर्णाकारं जटाभारं दधतं शिरसा मुदा । शान्तं कान्तं त्रिजगतां भक्तानुग्रहकातरम् ॥
मां च स्वमीश्वरं मत्वा प्रदाता सर्वसम्पदाम् । ददाति सर्वं सर्वेभ्यो वाञ्छितं कल्पपादपः
यो यं प्रार्थयति तस्मै वरं दत्त्वा वरेश्वरः । बभूव गर्वसंयुक्तः स्वात्मारामः स्वलीलया
एकदा च वृको दैत्यस्तपस्तेपे शिवस्य च । केदारे च कठोरेण वर्षमेकं दिवानिशम् ॥
नित्यं याति तत्समीपं कृपया च कृपानिधिः । वरं दातुं यथार्थोऽपि न जगादासुरो वरम्
वर्षान्ते शङ्करः शश्वत्तस्थौ तत्पुरतः स्वयम् । वरदो भक्तिवादेन हस्तं गन्तुं तस्य द्रुतः
सर्वैश्वर्यं सर्वसिद्धिं मुक्तिं भुक्तिं हरेः पदम् ।
दैत्यः किञ्चिन्न गृह्णाति वरितः शूलपाणिना ॥ २८ ॥
ध्यायमाने तत्पदाब्जे दृष्ट्वा भक्तो महेश्वरः । अयाचितारं निर्विष्टं वरार्थं प्रेमविह्वलः ॥
अतीव रोदमानस्य ध्यानभङ्गो बभूव । ददर्श पुरतः साक्षाद्दातारं सर्वसम्पदाम् ॥३०॥

तदाहं कलया शीघ्रं वृषरूपं विधाय च ।
शयानं शङ्करं धृत्वा विषाणाभ्यामुदक्रमम् ॥ ५२ ॥

ददौ तस्मै स्वकवचं स्वशूलमरिमर्दनम् । प्राप्य तद्दानवस्थानमत्यूर्ध्वं च निराश्रयम् ॥
मया दत्तेन शूलेन जघान त्रिपुरं हरः । मामेव दर्पहन्तारं तुष्टाव व्रीडितः पुनः ॥ ५४ ॥
सद्यः पपात दैत्येन्द्रश्चूर्णीभूतश्च भूतले । देवता मुनयः सर्वे तुष्टुवुः शङ्करं मुदा॥५५॥
तत्याज शङ्करो दर्पं विश्वबीजन्ततो विभुः । ज्ञानानन्दस्वरूपश्च निर्लिप्तः सर्वकर्मसु ॥

ततोऽहं वृषरूपेण वहामि तेन तं प्रियम् ।
मम प्रियतमो नास्ति त्रैलोक्येषु शिवात्परः ॥ ५७ ॥

मनःस्वरूपो ब्रह्मा मे ज्ञानरूपो महेश्वरः । बुद्धिर्भगवती दुर्गा मूलप्रकृतिरीश्वरी ॥५८॥
निद्रादयःशक्तयो यास्ताःसर्वाः प्रकृतेःकलाः । वागधिष्ठातृदेवी या सा स्वयंचसरस्वती
मम कल्याणाधिदेवो हर्षरूपो गणेश्वरः । परमार्थः स्वयं धर्मो मम भक्तो हुताशनः ॥
सर्वैश्वर्याधिदेवी मे सर्वगोलोकवासिनः । प्राणाधिष्ठातृदेवीयं सदा प्राणाधिकामम

गोपाङ्गनास्तव कला अतएव मम प्रियाः ।
मल्लोमकूपजा गोपाः सर्वे गोलोकवासिनः ॥ ६२ ॥

तेजःस्वरूपः सूर्यश्च प्राणा मे वायवःस्मृताः। जलाधिदेवो वरुणः पृथिवीमे मलोद्भवा
मम शून्यो महाकाशो मदनो मानसोद्भवः । इन्द्रादयः सुराःसर्वे मत्कलांशांशसम्भवाः
एतानि सृष्टिबीजानि महदादीनि चैव हि । सर्वेषां बीजरूपोऽहं स्वयमात्मा निराश्रयः
जीवो मे प्रतिबिम्बश्च कर्मभोगाधिकारकः । अहंसाक्षी निरीहश्च न भोगी सर्वकर्मसु
भक्तध्यानार्थदेहोऽयं मम स्वेच्छामयस्य च । प्रकृतिः पुरुषोऽहञ्च एक एव परात्परः
इत्येवं कथितं राधे शिवदर्पविमोचनम् । सृष्टिबीजञ्च शृणु मे पार्वतीदर्पमोचनम्॥६८॥

श्रीनारायण उवाच ।

इत्युक्तवन्तं श्रीकृष्णं परमात्मानमीश्वरम् । पप्रच्छ राधिकादेवी निगूढमभिवाञ्छितम्

श्रीराधिकोवाच ।

भगवन् सर्वतत्त्वज्ञ सर्वबीज सनातन । यद् मे वाञ्छितं प्रश्नं सर्वसन्देहभञ्जनम् ॥७०॥

उपान मधुरं देवी हृदयेन विदूयता। गोपीभिः सहबिर्मनया रोदिता श्वेतचामरैः ॥

श्रीराधिकोवाच।

गुणागच्छ वत्स त्वं मास्य विस्मरसम्पदा। मनोऽप्ययमौनात्स्येव भवतीमयसागरे
तीर्थं पवनं त्वं गच्छ कथय साम्प्रतम्। श्रीकृष्णो परमानन्दं शीघ्रमानय मत्प्रभुम् ॥
योषिज्जन्मनि योषित्सु सम्प्राप्य तादृशं पतिम्।
भेदो बभूव कस्या वा मद्वया कापि दुःखिनी ॥ ५ ॥
किं ददासि प्रबोधं मे नास्ति मे बोधमोचितम्।
निष्फलो देहिनां देहो विनात्मानं सदोद्धव ॥ ६ ॥
प्रीत्या सह सौभाग्यं गौरवं नित्यनूतनम्। अतीवदुर्लभं प्रेमरहस्यं नवसङ्गमम् ॥७॥
स्मरामि मनसा शश्वत्साध्वी मनसि वर्तते। रात्रौ निद्रां परित्यज्य स्मरणं शोकवर्धनम्
सुन्दर ध्रुवं वत्स निमग्ना शोकसागरे। जीवामयप्रदानेन तीर्थे स्नानफलं नृणाम् ॥
बोधितुं न शक्नोमि दुर्निवारञ्च मानसम्। चिन्तये चरणाम्भोजं कृष्णस्य परमात्मनः
तद्गुणं महिमानञ्च प्रीतिञ्च प्रेमसागरम्।
स्मारं स्मारञ्च सौभाग्यं मनो मे न स्थिरं चिरम् ॥ ११ ॥
जगतां युवतीनाञ्च कासां वा दुःखमीदृशम्।
श्रीकृष्णभेददुःखञ्च का वा जानाति मां विना ॥ १२ ॥
किञ्चिज्जानाति सीता साप्यहञ्च विधियोधितम्।
मत्परा दुःखिनी नास्ति कामिनीषु जगत्त्रये ॥ १३ ॥
का वा याति प्रतीतिं मे श्रुत्वा च मानसीं व्यथाम्।
कासां वा मत्समं दुःखं युवतीनां सुतोद्धव ॥ १४ ॥
मत्कासदृशीस्त्रीषु न भूता न भविष्यति। दुःखिनीविरहार्ता सुखसौभाग्यवर्जिता
सम्प्राप्य कल्पवृक्षञ्च पतिञ्च जगतां पतिम्।
वञ्चिताऽहं विधात्रा च निर्दयेन च पापिना ॥ १६ ॥
नं सफलं जन्म सुस्निग्धं चक्षुषी मनः। तत्पादपद्मवक्त्रेन्दुरूपवेशायदर्शनात् ॥१७॥

यन्नामश्रुतिमात्रेण पञ्चप्राणाः प्रहर्षिताः ।
स्मृतिमात्रात् प्रफुल्लन्ते आत्मा सुस्निग्ध एव च ॥ १८ ॥
यश्च पस्पर्श सुरतौ यशस्विभुवनेष्वपि । कया वा सम्पदा वत्स विस्मरामि तमीश्वरम्
त्रैलोक्यविजयं रूपं गुणमेव बिभर्ति यत् ।
न निर्मितो यो विधिना तेनैव निर्मितो विधिः ॥ २० ॥
तं विधेश्च विधातारं दातारं सर्वसम्पदाम् ।
कल्पवृक्षात्परं शान्तं लक्ष्मीकान्तं मनोहरम् ॥ २१ ॥
सर्वेशं सर्वबीजञ्च परमात्मानमीश्वरम् ।
कया वा सम्पदा तात विस्मरामि च तं पतिम् ॥ २२ ॥
यस्यनिर्मञ्छनार्हश्च न चन्द्रो न [illegible] मन्मथः । नैवाश्विनीकुमारश्च गुणसाम्यं न विश्वतः
ध्यायन्ते यत्पदाम्भोजं ब्रह्मेशशेषसंज्ञकाः ।
कया वा सम्पदा तात विस्मरामि च तं प्रभुम् ॥ २४ ॥
स्वप्ने पश्यन्ति ये रूपमतुलञ्च मनोहरम् । तेऽपि सर्वं परित्यज्य ध्यायन्ते तमहर्निशम्
गुणेन शैलः सलिलं शुष्ककाष्ठं द्रवेदिति । मृतवृक्षो मुकुलितः स्तम्भितश्च समीरणः
सूर्यश्च जलधिश्चैव स्थगितौ भक्तिभावतः ।
कया वा सम्पदा पुत्र विस्मरामि च तं प्रियम् ॥ २७ ॥
यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात् । वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति जन्तुषु ॥
यद्भयात्फलिता वृक्षाः पुष्पिताःसमयेऽपि च । समुद्राःस्वात्मविषये ब्रह्माश्च मुनयःसुराः
कालस्य कालः संवर्तः संहर्ता चतुरीश्वरः । स्वाधीनश्च स्वतन्त्रश्च स्वयमेवात्मसंज्ञकः
कया वा सम्पदा भक्त विस्मरामि च तं प्रभुम् ।
प्रबोधो नास्ति तद्दूरे येन मां बोधयेद् बुधः ॥ ३१ ॥
माञ्च बोधयितुं शक्ता न सावित्री सरस्वती ।
न वेदा न च वेदाङ्गाः के वा सन्तश्च के सुराः ॥ ३२ ॥
सहस्रवक्त्रोऽनन्तश्च वेदानां जनको विधिः । न शम्भुर्न गणेशश्च योगीन्द्राणांगुरोर्गुरुः

स्त्रियोर्गोनिभिन्नाया मार्गरूपे पुनोगतिः । कालसाध्यश्च सर्वं च सुखं दुःखं शुभाशुभम्
दुर्निवारः स कालश्च कालसाध्यं जगत्त्रयम् । उत्तिष्ठ मथुरां गच्छ तूर्णं वत्स मनोहरम्
व्रजवासं परित्यज्य सर्वांश्च गमनोत्सुकः । सुचिरं कृष्णविच्छेदो दुःखाय न सुखाय न
पश्य चन्द्रमुखं तस्य जन्ममृत्युजरापहम् । राधिकावचनं श्रुत्वा रुरोद भृशमुद्धवः ।
रुदन्तीं राधिकां दृष्ट्वा बन्धुविच्छेदकातराम् ॥ ३७ ॥

इति श्रीब्रह्मवैवर्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
राधोद्धवसंवादे पञ्चनवतितमोऽध्यायः ।

---

## षण्णवतितमोऽध्यायः

### राधोद्धवसंवादवर्णनम् ।

श्रीनारायण उवाच ।

श्रीकृष्णस्मरणं कृत्वा गमनोन्मुखमुद्धवम् । नतं राधापदाम्भोजे शिरसा पुलकाञ्चितम्
उवाच माधवी गोपी रुदन्ती प्रेमविह्वला । भक्तं रुदन्तमुद्वीक्ष्य राधाविच्छेदकातरम् ॥

माधव्युवाच ।

उद्धव शृणु वक्ष्यामि क्षणं तिष्ठ यथोचितम् ।
निगूढं परमं ज्ञानं यत्ते मनसि वाञ्छितम् ॥ ३ ॥

सुदुर्लभं पुराणेषु वेदेषु गोपनीयकम् । प्रश्नं कुरु महाभाग राधिकां त्रिजगत्प्रसूम् ॥
इत्युक्त्वा सा च गोपीशा समुवासस्तु संसदि । उवाच मधुरं शान्तामुद्धवश्चापि राधिकाम्

उद्धव उवाच ।

एकाकी भवमायाति यात्येकाकी पुनः पुनः ।
प्राणी कर्मानुरोधेन स्वकर्मफलभुक् पुमान् ॥ ६ ॥

· जायते जन्तुः कर्मणैव प्रलीयते । सुखं दुःखं भयं शोकः कर्मणैवाभिपद्यते ॥

जन्तुर्भोगावशेषेण भोगं भुङ्क्ते भवेषु च ।
पुनश्च कर्मणो भोगात्समायाति च याति च ॥ ८ ॥
रत्नादिकञ्च यत् किञ्चिन् मह्यं दत्तं त्वया सति ।
मया सार्द्धं न यात्येव तेन मे किं प्रयोजनम् ॥ ६ ॥
भवाब्धितारणे देवी भवती तरणीधरा । कर्णधारः स्वयं कृष्णः सर्वेषां पारकारकः ॥
किञ्चिद्दानं देहि मह्यं भवाब्धिपारकारणम् ।
प्राप्य प्रसादं यास्यामि मथुरां कृष्णमूलकम् ॥ ११ ॥
यां यां कालगतिं मातः सुराणाञ्च नृणामपि । पितॄणां ब्रह्मलोकस्य सपूर्वस्य च तां वद
तामेव दुस्तरां घोरां तीर्त्वा यामि हरेः पदम् । पदम्मूलमुपायञ्च देहि मे कमलालये ॥
दूतोऽपरपदाम्भोजं ध्यायन्नेवदिवानिशम् । देवा ब्रह्मेशशेषाद्यास्त्वंतदब्रक्षःस्थलस्थिता
उद्धवस्य वचः श्रुत्वा जहास कमलालया । वाससा नेत्रनीरञ्च संमार्जितमुवाच सा ॥
माधवीवचनेनैव करोषि प्रश्नमुद्धव । स्त्रीजातिरबला लोके किं वा ज्ञानं ददामि ते ॥
श्रुतां कालगतिं वत्स जानातिभगवान् हरिः । ब्रह्मा महेशः शेषञ्च वेदाश्चत्वार एव च
किञ्चिद्वेदानुसारेण सन्तो जानन्ति पुत्रक । श्रूयतां कृष्णवक्त्रेण गोलोके रासमण्डले ॥
गोलोके चापि वैकुण्ठे ब्रह्मलोके च साम्प्रतम् । या च दुष्टाकालगतिस्तामेवकथयामिते
नृणां पितॄणां देवानां ब्रह्मलोकादिकस्य च ।
बहिर्लोकस्य ब्रह्माण्डात् पातालाद्याञ्च निश्चितम् ॥ २० ॥
दुरत्ययां कालगतिं येनोपायेन पण्डिताः । निस्तरन्ति बुधश्रेष्ठ कथयामि निशामय ॥

श्रीराधोवाच

भजन्ति जगतां नाथं कालकालं जगद्गुरुम् । निर्गुणञ्च निरीहञ्च परमात्मानमीश्वरम् ॥
सद्यःपतति देहोऽयं विनाये न सदात्मना । तं निषेव्य कालगतिं तरत्येव हि केवलम् ॥
वायुर्हरति सर्वेषां प्राणिनां रविरेवच । श्रीहरेः शुद्धभक्तानां सतांपुण्यवतांविना ॥
विधेर्मानसिकान् पुत्रानचतुरः पश्यपुत्रक । सनकादीन्भागवतान् येषां च सुस्थिरं वयः
ब्रह्मणाम्वयसादित्वान् ज्ञानिनाञ्च गुरोर्गुरून् । बालानुपनीतांश्च पञ्चवर्षशिशून् यथा ॥

भ्रमन्तौ महाघोरान्सम्मितांश्च दिगम्बरान् । श्रीकृष्णध्यानपूतांश्च तीर्थपूतांश्च वैष्णवान्

ऐश्वर्ये वाद्यशास्त्राणां निद्राहीनान् प्रफुल्लितान् ।
भ्रमतः दिवानिशं शश्वत् हरिभावेन तत्परान् ॥ २८ ॥
आहारनिद्राविहीनांश्च पूतान् मानसिकांस्तथा ।
मृत्युञ्जयान् महाभागान् कालव्यालजितस्तथा ॥ २९ ॥

सनकञ्च सनन्दञ्च तृतीयञ्च सनातनम् । परं सनत्कुमारञ्च ये स्मरन्ति च सर्वशः ॥
तीर्थस्नानफलं लब्ध्वा मुच्यन्ते कृतपातकात् । हरिभक्तिर्भवत्येषां हरिदास्यं लभन्ति च
मृकण्डुबालकं पश्य कर्मणा च द्विजोत्तमम् । दशपर्णायुषं तीर्थं ज्वलन्तं ब्रह्मतेजसा ॥
हरिसेवनतः पश्चात् सप्तकल्पान्तजीवनम् । वोढुं पञ्चशिखं पश्य लोमशञ्चासुरिं तथा ॥
सर्वकर्मविहीनञ्च हरिसेवनतत्परम् । शतकल्पायुषञ्चैव ध्यायमानं हरेः पदम् ॥ ३४ ॥
जमदग्नेः सुतं पश्य रामं तं चिरजीविनम् । हनुमन्तं बलिं व्यासमश्वत्थामानमेव च ॥
विभीषणं कृपं विप्रं जाम्बवन्तञ्च भल्लुकम् । हरिभावनया चैते शुद्धाः सुचिरजीविनः ॥
सिद्धेन्द्रेषु नरेन्द्रेषु नरेष्वन्येषु बोद्धव्य । हरिभावनशुद्धाश्च सर्वे ते चिरजीविनः ॥ ३७ ॥

प्रह्लादं पश्य दैत्येषु हिरण्यकशिपोः सुतम् ।
हरिद्विषो दुरन्तस्य हरिभावनतत्परम् ॥ ३८ ॥

चिरायुषं कालजितं पश्याप्यञ्चाप्यसंशयम् । अनेकजन्मतपसा लब्ध्वा जन्म च भारते
ये हरिं तं न सेवन्ते ते मूढाः कृतपापिनः । वासुदेवं परित्यज्य विषये निरतो जनः ॥

त्यक्त्वामृतं महामूढो विषं भुङ्क्ते निजेच्छया ।
कस्य स्त्री कस्य वा पुत्रः कस्य वा बान्धवास्तथा ॥ ४१ ॥
कः कस्य बन्धुर्विपदि श्रीकृष्णेन विना भुवि ।
तस्मात्सन्तः सदा कृष्णं भजन्त्येव दिवानिशम् ॥ ४२ ॥

जन्ममृत्युजराव्याधिहरं सर्वहरं परम् । कालस्य तरणोपायं भजनं परमात्मनः ॥ ४३ ॥
आनन्दनन्दनस्यैव परिपूर्णतमस्य च । शृणु कालपते वत्स मदीयज्ञानगोचरम् ॥४४॥
नराणाञ्च पितॄणाञ्च सुराणाञ्चापि ब्रह्मणः । नागानां राक्षसादीनां तत्परेषाञ्च पुत्रक ॥

कथयामि निगूढार्थं सावधानं निशामय । सर्वस्माच्च परस्थानः सर्वाधारो महान्विराट्

यस्य लोमसु विश्वानि चासंख्यानि च तानि च ।
सर्वस्माच्च परं सूक्ष्मं परमाणुं निशामय ॥ ४७ ॥

कालारम्भात्मकं सर्वमनूहं परमीप्सितम् । परमः सद्विशेषाणामनेको संयुतः सदा ॥
परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः । परमाणुद्वयेनाणुस्त्रसरेणुस्तु ते त्रयः ॥४९॥
त्रसरेणुत्रिकेणापि त्रुटिरुक्ता मनीषिभिः । वेधस्त्रुटिशतेनैव त्रिवेधेन लवस्तथा ॥ ५०॥
त्रिलवेन निमेषश्च त्रिनिमेषेण च क्षणः । काष्ठा पञ्चक्षणेनैव लघुश्च दशकाष्ठया ॥५१॥
लघु पञ्चदशं दण्डस्तत्प्रमाणं निशामय । द्वात्रिंशार्द्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः ॥५२॥

स्वर्णमाषैः कृतच्छिद्रं यावत्प्रस्थजलप्लुतम् ।
दण्डद्वये मुहूर्तः स्यात् षष्टिदण्डात्मिका तिथिः ॥ ५३ ॥

सदष्टभागः प्रहरः प्रमाणञ्च निरूपणम् । चतुर्भिः प्रहरै रात्रिश्चतुर्भिर्दिनमुच्यते ॥ ५४ ॥
तिथिपञ्चदशेनैव पक्षमासे प्रकीर्तितम् । पक्षद्वयेन मासः स्याच्छुक्लकृष्णाभिधेन च ॥

ऋतुर्मासद्वयेनैव तत्षट्केनैव वासरः ॥ ५६ ॥
वसन्तो ग्रीष्मवर्षौ च शरद्धेमन्तशीतकः ।
वर्षाः पञ्चविधा ज्ञेयाः कालविद्भिर्निरूपिताः ॥ ५७ ॥

संवत्सरः परिवत्सर इडावत्सर एव च । अनुवत्सरो वत्सरोऽयमिति कालविदो विदुः

अब्दो द्विषट्कमासैश्च तन्नाम शृणु बोधय ।
वैशाखो ज्यैष्ठ आषाढः श्रावणो भाद्र एव च ॥ ५९ ॥
आश्विनः कार्तिको मार्गः पौषो माघस्तु फाल्गुनः ।
चैत्रस्तु चरमो ज्ञेयो वर्षशेषो निरूपितः ॥ ६० ॥

वसन्तश्चैत्रवैशाखमासयुग्मेन कीर्तितः । ज्यैष्ठाषाढद्वयेनैव ग्रीष्मस्तु परिकीर्तितः ॥६१॥

वर्षा श्रावणभाद्रे च ह्याश्विने कार्तिके शरत् ।
मार्गे पौषे च हेमन्तः शिशिरो माघफाल्गुने ॥ ६२ ॥

अब्दस्तु चायने द्वे वै चोत्तरे दक्षिणायने । माघादिषट्कनिर्मितमुत्तरायणमीप्सितम् ।

श्रावणादिमसत्कं दक्षिणायनमेव च ॥ ६३ ॥

...दिः श्रावणाच्चापौषपर्यन्तमेव च । प्रतिपत्पूर्णिमान्तं तस्य शुक्लपक्षः प्रकीर्तितः ॥६४

...तायाः प्रतिपदश्चामावास्यन्त एव च । कृष्णपक्षस्तु विज्ञेयो वेदविद्भिर्निरूपितः ॥

द्वितीया च तृतीया च चतुर्थी पञ्चमी तथा ।

षष्ठी च सप्तमी चैव ह्यष्टमी नवमी तथा ॥ ६६ ॥

...एकादशी चापि द्वादशी च त्रयोदशी । चतुर्दशी कुहूर्यावद्दिनन्तु गणनं स्मृतम् ।

अश्विनी भरणी चापि कृत्तिका रोहिणी तथा ।

मृगशिरो तथार्द्रा च नक्षत्रे द्वे पुनर्वसू ॥ ६८ ॥

पुष्याश्लेषे मघा चैव पूर्वा चोत्तरफाल्गुनी ।

हस्तचित्रे तथा स्वाती विशाखा चानुराधिका ॥ ६९ ॥

...ष्ठा मूलं तथा ज्ञेया पूर्वाषाढोत्तरा तथा । श्रवणाभिजिते चैव धनिष्ठा च प्रकीर्तित

...शतभिषा ज्ञेया पूर्वाभाद्रपदस्तथा । तथोत्तरा तु विज्ञेया रेवती चरमा स्मृता ।

...विंशति नक्षत्रं कलत्रं शशिनस्तथा । क्रमेण ताभिः सार्द्धञ्च चन्द्रस्तिष्ठति नित्यश

...विंशतिनक्षत्रं कलत्रञ्च श्रुतौ श्रुतम् । अभिजिच्छ्रवणच्छाया तेनाष्टाविंशतिः स्मृ...

एकदा च मधौ चन्द्रो रोहिण्या वामया सह ।

रेमे दिवानिशं नित्यं श्रवणा च चुकोप सा ॥ ७४ ॥

छायाञ्च दत्त्वा चन्द्राय ययौ तातान्तिकं भिया ।

ततो पितरमादाय सा चक्रे च विभागकम् ॥ ७५ ॥

...ष तेन नक्षत्रमभिजिन्नामकं पुरा । एतत्कृत्वा कृष्णमुखाच्छ्रुतभङ्गे च पर्वते

...त्रं कथितं वत्स तिथ्या भ्रमति नित्यशः । योगञ्च करणञ्चैव मद्वक्त्रेण निशामय

...ष्कम्भःप्रीतिरायुष्मान्सौभाग्यंशोभनस्तथा । अतिगण्डःसुकर्मा च धृतिःशूलस्तथैव

...गण्डोवृद्धिर्ध्रुवश्चैव व्याघातोहर्षणस्तथा । वज्रंसिद्धिर्व्यतीपातो वरीयान्परिघःशि...

सिद्धिः साध्यः शुभः शुक्लो ब्रह्मेन्द्रो वैधृतिस्तथा ।

कीर्तितस्ते योगगणो करणं श्रूयतामिति ॥ ८० ॥

ध्रवश्च वालवश्चैव कौलवस्तैतिलस्तथा । गरश्च वणिजश्चापि विष्टिश्च शकुनिस्तथा ॥
चतुष्पाच्चापि नागश्च किंस्तुघ्न इतिकीर्तितम् । नराणाञ्चापि मासेन पितॄणाञ्च दिवानिशम्
शुक्ले चापि दिनन्तेषां कृष्णे नक्तं प्रकीर्तितम् ।
वत्सरेण नराणाञ्च सुराणाञ्च दिवानिशम् ॥ ८३ ॥
दिनन्तेषामुत्तरे च मकरञ्च दक्षिणायने । मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः ॥८४॥
मनोरायुःपरिमितं शक्रस्यायुः प्रकीर्तितम् । पञ्चविंशत् सहस्रञ्च तथा पञ्चशतं परम् ॥
तत्र सूर्यगतिर्नास्ति शक्रपातानुसारतः । दिवानिशञ्च जानन्ति ब्रह्मलोकनिवासिनः ॥
दण्डद्वयं नरपलं शक्रपातेन तत्पलम् । एवं त्रिंशद्दिनैनैव धातुर्मासः प्रकीर्तितः ॥ ८७ ॥
अब्दो द्वादशभिर्मासै एवं तस्य शतायुषः । ब्रह्मणः पतनेनैव निमेषात् श्रीहरेरपि ॥८८॥
धातुः पातानुसारेण वैकुण्ठेन दिवानिशम् ।
तत्र सूर्यगतिर्नास्ति चैवं गोलोकतः स्मृतम् ॥ ८९ ॥
वैकुण्ठवासिनः सर्वे न वै जानन्त्यहर्निशम् ।
चन्द्रस्यापि ग्रहाणाञ्च गतिर्नास्ति च तत्र वै ॥ ९० ॥
चक्रं नैव भ्रमत्येव राशीनामिच्छया हरेः । दिनञ्च तेजसा दीप्तं कृष्णस्य परमात्मनः ॥
नक्तं तेजोविहीनञ्च हरौ च मन्दिरं गते । एवं कालगतिस्तत्र विष्णुलोकेऽस्ति सन्ततम्
कालस्वरूपो भगवान् परमात्मा निराकृतिः । चन्द्रसूर्यगतिर्नास्ति पातालेषु सततन्तु
तद्वासिनश्च जानन्ति शङ्खे न दिवानिशम् ।
दिने च मूर्ध्नि नागानां मणिरुच्चलति नित्यशः ॥ ९४ ॥
सन्ध्यायां दीप्तमग्निश्च रात्रिश्च तमसावृता । कालन्तत्परिमाणेन जानन्ति तन्निवासिनः
यथा भुवि तथा तत्र परिमाणं प्रकीर्तितम् । कृतं त्रेता द्वापरञ्च कलिश्चेति चतुर्युगम् ॥
दिव्यैर्द्वादशसाहस्रैर्वत्सरैश्चापि तन्मितम् । अष्टौ शतान्यप्यधिकं सहस्राणां चतुष्टयम्
दिव्यैर्वर्षैः कृतयुगं कालविद्भिर्निरूपितम् ।
अष्टाविंशत् सहस्राण्यप्यधिकं परिमाणकम् ॥ ९८ ॥
लक्षाणाञ्च सप्तदशानुमाणं परिकीर्तितम् । अधिकं षट्शतान्येव सहस्राणां शतं तथा ॥

दिव्यैर्वर्षैश्च त्रेतेति वत्स कालविदो विदुः । षण्णवतिसहस्राणि लक्षैर्द्वादशभिः स
नृणां वर्षैश्च त्रेतेति कालविद्भिः प्रकीर्तितः । चतुष्टयं शतानाञ्चाप्यधिकं द्विसहस्र

वर्षं दिव्यं द्वापरञ्च कालज्ञैः परिकीर्तितम् ।
चतुःषष्टिसहस्राणि लक्षैरष्टभिरेव च ॥ १०२ ॥

नृणां वर्षैर्द्वापरञ्च कालज्ञैः परिकीर्तितम् । अधिकं द्विशतञ्चैव दिव्यं वर्षसहस्रकम्
वर्षं मितं कलियुगं वत्स प्राज्ञैर्निरूपितम् । द्वात्रिंशच्च सहस्रञ्च चतुर्लक्षं नृमानकम्
वर्षञ्चेति कलियुगे चकार कालकोविदः । लक्षैर्द्विचत्वारिंशद्भिः सह विंशत्सहस्रकैः
नृमानवर्षैः कालज्ञैर्व्येकमेव चतुर्युगम् । इति ते कथितं वत्स कालसंख्यानिरूपणम्

यथाश्रुतं यथाज्ञानं गच्छ वत्स हरेः पुरम् ॥ १०७ ॥

इति श्रीब्रह्मवैवर्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
राधोद्धवसंवादे कालनिरूपणं नाम षण्णवतितमोऽध्यायः ।

---

## सप्तनवतितमोऽध्यायः

### राधोद्धवसंवादवर्णनम् ।

श्रीनारायण उवाच ।

गच्छन्तमुद्धवं दृष्ट्वा सम्भ्रमा श्रीहरेः प्रिया । समुत्थायासनात् शीघ्रं हृदयेन विदूयता

गोपीभिः सहिता शीघ्रं समुद्विग्ना महासती ।
ददौ शुभाशिषं तस्मै तस्य मूर्ध्नि करं तथा ॥ २ ॥
स्निग्धदूर्वाक्षतं शुक्लधान्यं पुष्पञ्च मङ्गलम् ।
प्रेरयामास मालाञ्च फलं पर्णं तथा दधि ॥ ३ ॥

दर्शयामास पूर्णकुम्भं सपल्लवम् । सरत्नं गन्धसिन्दूरकस्तूरीचन्दनान्वितम् ॥४॥
प्रदीपञ्च रत्नगन्धं द्विजोत्तम । पतिपुत्रवतीं साध्वीं काञ्चनं दर्पणं तथा ॥

ाच महासाध्वी हितं सत्यञ्च मङ्गलम् । सङ्गोप्यं साश्रुनेत्रञ्च पवित्रं दुःखिता हृदि
राधिकोवाच ।

शुभं भवतु मार्गस्ते कल्याणमस्तु सन्ततम् ।
ज्ञानं लभ हरेः स्थानात् कृष्णस्य सुप्रियो भव ॥ ७ ॥

क्तिः कृष्णदास्यं वरेषु च वरं वरम् । श्रेष्ठा पञ्चविधा मुक्तेर्हरिभक्तिर्गरीयसी ॥
ादपि देवत्वादिन्द्रत्वादमरादपि । अमृतात् सिद्धिलाभाच्च हरिदास्यं सुदुर्लभम् ॥
न्मतपसा सम्भूय भारते द्विज । हरिभक्तिर्यदि लभेत्तस्य जन्म सुदुर्लभम् ॥१०
जीवनं तस्य कुर्वतः कर्मणः क्षयम् । पितॄणाञ्च सहस्राणि स्वस्य मातुश्च निश्चितम्
हानां पुंसां च शतानां सोदरस्य च । बान्धवस्यापि पत्न्याश्च गुरूणां शिष्यभृत्ययोः
शोभनं वत्स यच्च कृष्णे समर्पणम् । सत्कर्म शोभनं शुद्धं कृष्णसन्तोषणं यतः
साधनं कर्म सप्रीतिविधिपूर्वकम् । तदेव मङ्गलं धन्यं परिणामसुखावहम् ॥
तस्तवः स्मरणं तद्भक्तिः पूजनं तथा । तदुद्देश्यमनशनं केवलं दास्यकारणम् ॥१५॥
ृथिवीदानं प्रादक्षिण्यं भुवस्तथा । समस्ततीर्थस्नानञ्च समस्तञ्च व्रतं तपः ॥
ाहकरणं सर्वदानफलं तथा । समस्तवेदवेदाङ्गपठनं पाठनं तथा ॥ १७ ॥
रक्षणञ्चैव ज्ञानदानं सुदुर्लभम् । अतिथीनां पूजनञ्च शरणागतरक्षणम् ॥ १८॥
वेनञ्चैव वन्दनं जपनं मनोः । भोजनं विप्रदेवानां पुरश्चरणपूर्वकम् ॥ १९ ॥
पाञ्चैव पित्रोर्भक्तिश्च पोषणम् । सर्वं श्रीकृष्णदासस्य कलां नार्हति षोडशीम्
:व यत्नेन भज कृष्णं परात्परम् । निर्गुणञ्च निरीहञ्च परमात्मानमीश्वरम् ॥
यं परं ब्रह्म प्रकृतेः परमीश्वरम् । परिपूर्णतमं शुद्धं भक्तानुग्रहविग्रहम् ॥२२॥
कर्मणां साक्षिरूपं निर्लिप्तमेव च । ज्योतिःस्वरूपं परमं कारणानाञ्च कारणम्
ं सर्वेषां सर्वसम्पत्प्रदं शुभम् । भक्तिदं दास्यदं स्वस्य निजसम्पत्पदप्रदम् ॥
ातिबुद्धिञ्च मात्सर्यमशुभप्रदम् । भज तं परमानन्दं सानन्दं नन्दनन्दनम् ॥
वेदे कौथुमिशाखायां तस्य नाम्नां सहस्रकम् ।
नन्दनन्दननामोक्तं कृतविघ्नसुदुर्लभम् ॥ २६ ॥

उद्धवः सर्वमाकर्ण्य परमं विस्मयं ययौ । मानं सम्प्राप्य सम्पूर्णं परिपूर्णो बभूव ह ॥२९

व्यपत्रपश्च गले बद्ध्वा दण्डवत् प्रणनाम ताम् ।
मूर्ध्नः केशैश्च तत्पादं निबध्य च पुनः पुनः ॥ ३८ ॥

पुलकाञ्चितसर्वाङ्गः साश्रुनेत्रश्च भक्तितः । तद्विच्छेदशुचा प्रेम्णा रुरोदोच्चैश्च ना
रुरोद राधा तत्प्रेम्णा रुरोद यत्सखीगणः । उद्धवस्य गलं धृत्वा स्थापयामास तं
उद्धवं मूर्च्छितं दृष्ट्वा जृम्भितं त्यक्तचेतनम् । शीघ्रमुत्थापयामास राधिकाकृष्णमा
चेतनं कारयामास जलं दत्त्वा मुखाम्बुजे । शुभाशिषञ्च प्रददौ वत्स जीवेति ना
उद्धवश्चेतनं प्राप्य तामुवाच सुसंसदि । रुदन्तीनाञ्च गोपीनां पुरतः परमार्थदम्

उद्धव उवाच ।

धन्यं यशस्यं द्वीपानां जम्बुद्वीपः सुदुर्लभः ।
यत्र भारतवर्षन्तु सर्वेषामीप्सितं वरम् ॥ ३४ ॥

अहो भारतवर्षेषु पुण्यं वृन्दावनं वनम् । राधापादाब्जसंस्पर्शरजःपूतं सुरेप्सित

धन्या मान्या च पृथिवी त्रिषु लोकेषु पूजिता ।
राधायास्तीर्थपूतायाः पादाब्जरजसा परा ॥ ३६ ॥
षष्टिवर्षसहस्राणि दिव्यानि पुष्करे पुरा ।
ब्रह्मणा च तपस्तप्तं वेधोसं भक्तिपूर्वकम् ॥ ३७ ॥
गोलोके राधिकाकृष्णदर्शनार्थं मनोरमात् ।
गोलोके राधिकाकृष्णौ न दृष्टः स्वप्नतस्तदा ॥ ३८ ॥

श्रुता नैमाकाशवाणी सत्यरूपा [illegible] लीलया । वाराहे भारते वर्षे पुण्ये वृन्दावने वने
रासोत्सवे महारम्ये तत्रैव रासमण्डले । द्रक्ष्यसीति च देवानां मध्ये तुष्यो न संशय
श्रुत्वा च विरतो ब्रह्मा तपसः स्वगृहं गतः । कृष्णो दृष्टश्च दृष्टश्च परिपूर्णमनोरथः ।

गोपानां गोपिकानाञ्च सफलं जन्म जीवनम् ।
नित्यं पश्यन्ति ते पादपद्मं ब्रह्मादिदुर्लभम् ॥ ४२ ॥
मानिनीं राधिकां सन्तः सदा सेवन्ति नित्यशः ।

योगीन्द्राश्च मुनीन्द्राश्च सिद्धेन्द्रा वैष्णवास्तथा ॥ ४३ ॥

सतीं पुण्यां तीर्थपूतां स्वतःशुद्धां सुदुर्लभाम् ।

सुलभं यत्पदाम्भोजं ब्रह्मादीनां सुदुर्लभम् ॥ ४४ ॥

यत्पादपद्मनखरं कृतं यावकविह्नितम् । सर्वेश्वरेश्वरेणैव कृष्णेन परमात्मना ॥ ४५ ॥

चकार यस्याः पूजाञ्च स्तोत्रराजं सुदुर्लभम् ।

शतशृङ्गे स्वयं कृष्णो गोलोके रासमण्डले ॥ ४६ ॥

पारिजातप्रसूनानामञ्जलिं गन्धचन्दनम् । ददौ दूर्वाक्षतं स्निग्धं यस्याः पादारविन्दयोः

त्रिंशत्सहस्रकोटीनां गोपीनामीश्वरी च या ।

तत्पद्मत्रिंशत्सखीनाञ्च ईश्वरी राधिकाभिधा ॥ ४८ ॥

ये वा द्विषन्ति निन्दन्ति पापिनश्च हसन्ति च ।

कृष्णप्राणाधिकां देवदेवीञ्च राधिकां वराम् ॥ ४९ ॥

ब्रह्महत्याशतं ते च लभन्ते नात्र संशयः । तत्पापेन च पच्यन्ते कुम्भीपाके च रौरवे ॥

तप्ततैले महाघोरे ध्वान्ते कीटे च यन्त्रके । चतुर्दशेन्द्रावच्छिन्नं पितृभिः सप्तभिः सह

ततः परञ्च जायन्ते जन्मैकं लोकजन्मतः । दिव्यं वर्षसहस्रञ्च विष्ठाकीटाश्च पापतः ॥

पुंश्चलीनां योनिकीटास्तद्रक्तमलभक्षकाः । मलकीटाश्च तन्मात्रवर्षञ्च पूयभक्षकाः ॥

वेदे च काण्वशाखायामित्याह कमलोद्भवः ॥ ५३ ॥

इत्युक्तवन्तं तं यान्तमुवाच राधिका पुनः ।

रुदन्तञ्च रुदन्ती सा कृष्णविच्छेदकातरा ॥ ५४ ॥

श्रीराधिकोवाच ।

गच्छ वत्स मधुपुरीं सर्वं बोधय माधवम् । यथा पश्यामि गोविन्दं प्रयत्नेन तथा कुरु

निष्फलञ्च गतं जन्म गच्छ मिथ्या दुराशया ।

आशा हि परमं दुःखं नैराश्यं परमं सुखम् ॥ ५६ ॥

पश्चाद्विचिन्त्य गोविन्दं जीवन्मुक्ता बभूव सा ॥ ५७ ॥

इत्युक्त्वा राधिका तत्र रुरोद च भृशं पुनः । प्रणम्य तां रुदन्तीं च यशोदाभवनं ययौ

अथोद्धवे गते राधा मूर्छां सम्प्राप नारद । तत्याज चेतनं शश्वद् बभूव ध्यानतत्परा
पङ्कस्थे पङ्कजदले सजले शयने मुने । गोप्यस्तां स्थापयामासुः साश्रुनेत्रोत्पला ध
तत्स्पर्शमात्राच्छयनं भस्मीभूतं बभूव ह । पुनःस्निग्धस्थले स्निग्धनिचोले चन्दनान्ति

पुनस्तां स्थापयामासुर्विरहज्वरकातराम् ।
सहसा शुष्कतां प्राप सुगन्धिचन्दनोद्कम् ॥ ६२ ॥

निमेषेण शतयुगं तद् बभूवोद्धवं विना । हाहोद्धवोद्धव हरिं शीघ्रं गत्वा वदेति वा॥६३
समानय हरिं शीघ्रं यत् प्राणेश्वरमित्यपि । इत्युक्तवचनां दीनां सन्तापहृतचेतनाम् ।

रुरुदुर्गोपिकाः सर्वा राधां कृत्वा स्ववक्षसि ।
चेतनां कारयामासुर्बोधयामासुरीप्सितम् ॥ ६५॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
राधोद्धवसंवादे सप्तनवतितमोऽध्यायः ।

---

## अष्टनवतितमोऽध्यायः

### कृष्णोद्धवसम्वादवर्णनम् ।

श्रीनारायण उवाच ।

अथोद्धवो यशोदाञ्च प्रणम्य त्वरया मुदा । भर्जूरकाननं ग्रामे कृत्वा च यमुनां ययौ ।
स्नात्वा भुक्त्वा च तत्रैव जगाम मथुरां पुनः । ददर्श वटमूले च गोविन्दं रहसि स्थितम्
प्रफुल्लोऽप्युद्धवं दृष्ट्वा संस्मितं समुवाच सः । रुदन्तं शोकदग्धञ्च साश्रुनेत्रञ्च कातरम्

श्रीभगवानुवाच ।

आगच्छोद्धव कल्याणं राधा जीवति जीवति ।
... गोप्यश्च जीवन्ति विरहज्वरात् ॥ ४ ॥
... वत्सानाञ्च गवामपि । माता मे पुत्रविरहाद्यशोदा कीदृशी च सा

वद बन्धो यथार्थं तत्त्वां दृष्ट्वा किमुवाच सा ।
त्वयोक्ता जननी किं वा पुनः सा किमुवाच माम् ॥ ६ ॥
तद्यमुनाकूलं पुण्यं वृन्दावनं वनम् । निर्जनो वनतोयेश्च सुरम्यं रासमण्डलम् ॥७॥
। कुञ्जकुटीरौघे रम्ये क्रीड़ासरोवरम् । पुष्पोद्यानं विकसितं सङ्कुलञ्च मधुव्रतैः ॥८॥
भाण्डीरे च वटो दृष्टः सुस्निग्धो बालकान्वितः ।
दृष्टो गोष्ठो गवां दृष्टं गोकुलं गोकुलव्रजम् ॥ ६ ॥
यदि जीवति राधा सा दृष्ट्वा त्वां किमुवाच माम् ।
तत्सर्वं वद हे बन्धो चान्दोलयति मे मनः ॥ १० ॥
युर्गोपिकाःसर्वाःकिमूचुर्गोपबालकाः । गोपाश्च वृद्धाःकिंचोचुर्वयस्याजनकस्य मे
वस्य जननी किमूचे रोहिणी सती । किमूचुरपरास्तात बन्धुवल्लभवल्लभाः ॥ १२॥
किं भुक्तं किमपूर्वं वा दत्तं भाभा च राधया ।
कीदृक् वाक्यं सुमधुरं सम्भाषा कीदृशीति च ॥ १३ ॥
गोपानां गोपिकानाञ्च शिशूनां मातुरेव च ।
राधायाश्चापि कीदृग् वा मयि प्रेमोद्भवादिकम् ॥ १४ ॥
मरति माता मे माञ्चस्मरति रोहिणी । माञ्चस्मरति सा राधा मत्प्रेमविरहाकुला
माञ्च स्मरन्ति गोप्यश्च गोपाश्च गोपबालकाः ।
भाण्डीरे वटमूले च बालाः क्रीडन्ति मां विना ॥ १६ ॥
। ब्राह्मणीभिर्यत्र भुक्तं सुधोपमम् । ममदाबालकैःसार्द्धं यत्तद्दृष्टं परीप्सितम् ॥
स्थलं दृष्टं दृष्टं गोवर्धनं वरम् । ब्राह्मणा ■ हता गावो यत्र तत्तु दृष्टमुत्तमम्
स्य·वचः श्रुत्वा शोकोक्तं मधुरान्वितम् । उद्धवःसमुवाचेदं भगवन्तं सनातनम्
उद्धव उवाच ।
त्वया नाथ सर्वं दृष्टं यथेप्सितम् । सफलं जीवनं जन्म कृतमत्रैव भारते ॥
तत्सारञ्च पुण्यं वृन्दावनं वनम् । तत्सारं व्रजभूमौ च सुरम्यं रासमण्डलम् ॥
ता गोलोकवासिन्यो गोपिका वराः। दृष्टा तत्सारभूता च राधारासेश्वरीपरा

यमसात्ं निर्जने सुदुरस्थले । पद्मने पद्मजले सजले मन्दनानिले ॥ २३ ॥
तिविपण्णा सा स्नभूपणवर्जिता । मलीमसतिमा क्षीणा हारिणा शुक्लवासमा
सर्गीमिस्तत्र सततं शोककामरैः । श्वोरर्श्री निराहारा क्षणं श्वसिति न क्षनम्

क्षणं जीवति किं सा वा विरहाग्निप्रपीड़िता ।

किं वा जलं स्थलं किं वा नभः किं वा दिनं हरे ॥ २६ ॥

तु न जानाति किं परं किंतु बान्धवम् । बाह्यज्ञानविरहिता ध्यायमाना परं
यं वशासामाति तन्मृत्युसंशयसम्भवः। सर्वाद्भ्यां नैव वाञ्छन्ति प्रानर्दानाश्चदन्य
शीघ्रं अगत्वाय पादपद्मीयनमीरिसतम् । वहिमुंता न जगतां सा राधा त्वत्परायणा

भक्तीपभक्ता न त्वाऽया प्रभुणा रक्षिता सदा ।

न हि राधापरा भक्ता न भूता न भविष्यति ॥ ३० ॥

ःशङ्करानुमीतो भयांश्च तत्पुरःसरः । भवद्विधं पतिं प्राप्य कामरूपा च राधिका
हसर्यपरं कर्म तच्च केनापि धार्यते । मधुर्दहति चन्द्रश्च सततं किरणैन च ॥३२
सुगन्धिवायुश्चाप्यनाथा सर्वपीड़िता । ततकाञ्चनवर्णाभा साधुना कज्जलोपमा।
विवर्णकेशी च वासोवेशविवर्जिता । अयं विधाता त्वद्भक्तः सुराणां प्रवरो विभु
शङ्करो देवो योगीन्द्राणां गुरोर्गुरुः। सनत्कुमारस्त्वद्भक्तो गणेशो ज्ञानिनांवरः
द्राश्च कतिविधास्त्वद्भक्ता धरणीतले । त्वद्भक्ता यादृशीराधा भक्तस्तादृशोऽपरः
ते यादृशी राधा स्वय लक्ष्मीर्नतादृशी । हरिरायाति चेत्येवं राधाग्रे स्वीकृतंमया

शीघ्रं गच्छ महाभाग तत्रैव सार्थकं कुरु ॥ २७ ॥

स्य वचः श्रुत्वा जहासोद्धव माधवः । वेदोक्तं कथयामास सहितं सत्यसुव्रतम्

श्रीभगवानुवाच ।

धर्मविवाहेषु वृत्यर्थे प्राणसङ्कटे । गवामर्थे ब्राह्मणार्थे नानृतं स्याज्जुगुप्सितम् ॥
वीकारविहीनेन कुतस्त्वं नरकं कुतः । गोलोकं यातिमद्भक्तो नरकं न हि पश्यति
ङ्गीकारसाफल्यंकरिष्यामि तथापि च । यास्यामि स्वप्ने तन्मूलंगोपीनांमातुरेव च
कर्ण्य ययौ गेहमुद्धवश्च महायशाः । हरिर्जगाम स्वप्ने च गोकुलं विरहाकुलम् ॥

स्वप्ने राधां समाश्वास्य दत्त्वा ज्ञानं सुदुर्लभम् ।
सन्तोष्य क्रीडया तास्त्र गोपिकाश्च यथोचितम् ॥ ४३ ॥
बोधयित्वा यशोदाञ्च स्तनं पीत्वा च निद्रिताम् ।
गोपान् गोपशिशूंश्चैव बोधयित्वा ययौ पुनः ॥ ४४ ॥
इति श्रीब्रह्मवैवर्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
कृष्णोद्धवसंवादवर्णनं नामाष्टनवतितमोऽध्यायः ।

---

## नवनवतितमोऽध्यायः

भगवदुपनयनवर्णनम् ।

श्रीनारायण उवाच ।

एतस्मिन्नन्तरे गर्गो वसुदेवाश्रमं ययौ । दण्डी छत्री च जटिलो दीप्तश्च ब्रह्मतेजसा ॥१
शुक्लयज्ञोपवीती च तपस्वी संयतः सदा । शुक्लदन्तः शुक्लवासा यदोः कुलपुरोहितः ॥
तं दृष्ट्वा सहसोत्थाय देवकी प्रणनाम च । वसुदेवश्च भक्त्या च रत्नसिंहासनं ददौ ॥३
मधुपर्कं कामधेनुं वह्निशुद्धांशुकं तथा । दत्त्वा गन्धं पुष्पमाल्यं पूजयामास भक्तितः ॥
मिष्टान्नं परमान्नञ्च पिष्टकं मधुरं मधु । भोजयामास यत्नेन ताम्बूलं वासितं ददौ ॥५॥
प्रणम्य कृष्णं मनसा सबलञ्च विलोक्य च । उवाच वसुदेवञ्च देवकीञ्च पतिव्रताम् ॥

गर्ग उवाच ।

वसुदेव निबोधेदं सबलं पश्य पुत्रकम् । उपनीतोचितं शुद्धं वयसा साम्प्रतं वरम् ॥

वसुदेव उवाच ।

शुभक्षणं कुरु गुरो यदूनां पूज्यदैवते । उपनीतोचितं शुद्धं प्रशास्यश्च सतामपि ॥ ८ ॥

गर्ग उवाच ।

सर्वेभ्यो बान्धवेभ्योऽपि देह्यामन्त्रणपत्रिकाम् । संभारं कुरु यत्नेन वसुदेव ! वधूत्तम !

परश्वः शुभमेवास्ति चोपनेतुमिहार्हसि । दिनं सतामपि मतं विशुद्धं चन्द्रतारयोः ॥१०
गर्गस्य वचनं श्रुत्वा वसुदेवो वसूपमः । प्रस्थापयामास सर्वान् बन्धून्मङ्गलपत्रिकाम् ॥
घृतकुल्यां दुग्धकुल्यां दधिकुल्यां मनोहराम् । मधुकुल्यां गुडकुल्यां प्रवकारसमन्वित
राशिं नामोपहाराणां मणिरत्नं सुवर्णकम् । नानालङ्कारवस्त्रञ्च मुक्तामाणिक्यहारकम् ॥
श्रीकृष्णो देवगर्गांश्च मुनीन्द्रान्सिद्धपुङ्गवान् । सस्मारमनसाभक्त्याभक्तांश्चभक्तवत्सल:
शुभेदिने च संप्राप्ते ते च सर्वे समाययुः । मुनीन्द्रा बान्धवा देवा राजानो बहुशस्तथ
देवकन्या नागकन्या राजकन्याश्च सर्वशः। विद्याधर्य्यश्च गन्धर्वाश्चाप्सुरांश्चमाण्डक
ब्राह्मणा भिक्षुका भट्टा यतयो ब्रह्मचारिणः। सन्न्यासिनश्चावधूता योगिनश्च समाययु
स्त्रीयान्धवाःस्वबन्धूनांवर्गा मातामहस्य च । बन्धूनां बान्धवाःसर्वे स्वाययुःशुभकर्मणि
भीष्मो द्रोणश्चकर्णश्चाप्यश्वत्थामाकृपो द्विजः। सपुत्रो धृतराष्ट्रश्चसमार्य्यश्च समाययौ

कुन्ती सपुत्रा विधवा हर्षशोकसमाप्लुता ।
नानादेशोद्भवा योग्या राजानो राजपुत्रकाः ॥ २० ॥

अत्रिर्वशिष्ठश्च्यवनो भरद्वाजो महातपाः । याज्ञवल्क्यश्च भीमश्च गार्ग्यो गर्गो महातपाः
वत्सः सपुत्रश्च धर्मो जैगीषव्यः पराशरः । पुलहश्च पुलस्त्यश्चाप्यगस्त्यश्चापि सौभरिः
सनकश्च सनन्दश्च तृतीयश्च सनातनः । सनत्कुमारो भगवान् वोढुः पञ्चशिखस्तथा ॥

दुर्वासाश्चाङ्गिरा व्यासो व्यासपुत्रः शुकस्तथा ।
कुशिकः कौशिको राम ऋष्यशृङ्गो विभाण्डकः ॥ २४ ॥

शृङ्गी च वामदेवश्च गौतमश्च गुणार्णवः । मनुर्यतिश्चारुणिश्च शुक्राचार्यो बृहस्पतिः
अष्टावक्रो वामनश्च पारिभद्रश्च वाल्मिकिः । पैलो वैशम्पायनश्च प्रचेताः पुरजित् तथा
भृगुर्मरीचिर्मधुजित् कश्यपश्च प्रजापतिः । अदितिर्देवमाता च दितिर्दैत्यप्रसूस्तथा ॥
सुमन्तुश्च सुभानुश्च वकः कात्यायनस्तथा । मार्कण्डेयो लोमशश्च कपिलश्च पराशरः
पाणिनिः पारियात्रश्च पारिभद्रश्च पुङ्गवः । संवर्तश्चाप्युतथ्यश्च नरोऽहश्चापि नारद ! ॥

विश्वामित्रः शतानन्दो जाबालिस्तैतिलस्तथा ।
सान्दीपिनिश्च ब्रह्मांशो योगिनां ज्ञानिनां गुरुः ॥ ३० ॥

उपमन्युर्गौरमुखो मैत्रेयश्च श्रुतश्रवाः । कठः कण्वश्च करखो भरद्वाजश्च धर्मवित् ॥३१॥
सशिष्या मुनयः सर्वे वसुदेवाश्रमं ययुः । वसुदेवश्च तान् दृष्ट्वा ववन्दे दण्डवद्भुवि ॥
अथास्मिन्नन्तरे ब्रह्मा सस्मितो हंसवाहनः । रत्ननिर्माणयानेन पार्वत्या सह शङ्करः ॥

नन्दी स्वयं महाकालो वीरभद्रः सुभद्रकः ।
मणिभद्रः पारिभद्रः कार्त्तिकेयो गणेश्वरः ॥ ३४ ॥

गजेन्द्रेण महेन्द्रश्च धर्मश्चन्द्रो रविस्तथा । कुवेरो वरुणश्चैव पवनो वह्निरेव च ॥ ३५ ॥
यमः संयमिनीनाथो जयन्तो नलकूबरः । सर्वे ग्रहाश्च वसवो रुद्राश्च सगणास्तथा ॥

आदित्याश्च तथा शेषो नानादेवाः समाययुः ।
वसुदेवश्च भक्त्या च ववन्दे शिरसा भुवि ॥ ३७ ॥

तुष्टाव परया भक्त्या देवेन्द्रांश्च तथा सुरान् । भक्तिनम्रात्ममूर्त्ता च पुलकाञ्चितविग्रहः

वसुदेव उवाच ।

परं ब्रह्म परं धाम परमेशः परात्परः । स्वयं विधाता मद्गेहे जगतां परिपालकः ॥४१॥
वेदानां जनकः स्रष्टा सृष्टिहेतुः सनातनः । सुराणाञ्च मुनीन्द्राणां सिद्धेन्द्राणाङ्गुरोर्गुरुः
स्वप्ने यत्पादपद्मञ्च क्षणं द्रष्टुं सुदुर्लभम् । शिवस्मरणमात्रेण सर्वा विघ्नाः पलायिताः
सर्वसङ्कटमुत्तीर्य्य कल्याणं लभते नरः । सर्वाग्रे पूजनं यस्य देवानामग्रणीः परः ॥४२॥
वरेषु मङ्गलं मन्त्रैर्भवया चावाहनेन च । स्वयं गणेशो भगवान् स साक्षाद्विघ्ननायकः

कार्त्तिकेयश्च भगवान् देवादीनाञ्च पूजितः ।
देवानां प्रवरा पूज्या महालक्ष्मीः परात्परा ॥ ४४ ॥

मद्गेहे पार्वती माता जगतामादिरूपिणी । सर्वशक्तिस्वरूपा ■ मूलप्रकृतिरीश्वरी ॥४५॥
परात्पराणां परमा परब्रह्मस्वरूपिणी । यस्या अर्चां समाराध्य वाञ्छितं लभते नरः ॥

शरत्काले च भक्त्या च सा साक्षान्मम मन्दिरे ।
सर्वदेवैश्च सहिता सगणा भक्तवत्सला ॥ ४७ ॥

कृपामयी च कृपया चाविर्भूता च भारते । धन्योऽहं कृतकृत्योऽहं सफलं जीवनं मम ॥

आगतासि यतो दुर्गे पद्माद्या च मद्गृहम् ।

एवं सर्वांश्च तुष्टाव क्रमेण च परात्परम् ॥ ४९ ॥
सर्वान् मुनीन्द्रान् विप्रांश्च गले रत्नांशुकं मुदा ।
प्रत्येकं वासयामास रत्नसिंहासने वरे ॥ ५० ॥
पूजयामास विधिवत् क्रमेण [redacted] पृथक् पृथक् । प्रत्येकं वरयामास ब्रह्मादींश्च सुरान्
मुनिवर्गान् ब्राह्मणांश्च भक्त्या गर्गं पुरोहितम् ।
रत्नैः प्रवालैर्मणिभिर्मुक्तामाणिक्यहारकैः ॥ ५२ ॥
भूषणैर्वसनैश्चैव माल्यैश्च गन्धचन्दनैः । रत्नसिंहासने रम्ये सर्वेषां मध्यदेशतः ॥५३॥
गणेशं वरयामास पूजार्थं शुभकर्मणि । सप्ततीर्थोदकेनैव सुवर्णकलशेन च ॥ ५४ ॥
पुष्पचन्दनयुक्तेन शीतेन वासितेन च । स्वर्गगङ्गाजलेनैव पुष्करोदकपुण्यतः ॥ ५५ ॥
पञ्चामृतेन शुद्धेन पञ्चगव्येन भक्तितः । हेरम्बं स्नापयामास समुद्रोदेन मन्त्रतः ॥ ५६ ॥
वरयामास माल्येन पारिजातस्य नारद ! । रत्नेन्द्रभूषणेनैव वह्निशुद्धेन वाससा ॥५७॥
गन्धचन्दनपुष्पैश्च रत्नमाल्याङ्गुलीयकम् । तुष्टाव पार्वतीपुत्रं सर्वदेवाधिपं शुभम् ।
विघ्ननिघ्नकरं शान्तं भगवन्तं सनातनम् ॥ ५८ ॥

इति श्रीब्रह्मवैवर्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
भगवदुपनयने गणेशाभिषेके नवनवतितमोऽध्यायः ।

---

## शततमोऽध्यायः

### भगवदुपनयनवर्णनम् ।

श्रीनारायण उवाच ।

अथादितिर्दितिश्चैव देवकी रोहिणी रतिः । सरस्वती च सावित्री यशोदा च पतिव्रता
लोपामुद्रारुन्धती च अहल्या तारका तथा । ययुस्ताः पार्वतीं द्रष्टुं वेगेन मन्दिरादपि
परस्परञ्च संभाष्य समाश्लिष्य पुनः पुनः । प्रणम्य वेशयामासुर्मन्दिरं रत्ननिर्मितम् ॥

एवं सर्वांश्च तुष्टाव क्रमेण च परस्परम् ॥ ४९ ॥
सर्वान् मुनीन्द्रान् विप्रांश्च गले वस्त्रांशुकं मुदा ।
प्रत्येकं वासयामास रत्नसिंहासने वरे ॥ ५० ॥
पूजयामास विधिवत् क्रमेण च पृथक् पृथक् । प्रत्येकं वरयामास ब्रह्मादींश्च सुरान्
मुनिवर्यान् ब्राह्मणांश्च भक्त्या गर्गं पुरोहितम् ।
रत्नैः प्रवालैर्मणिभिर्मुक्तामाणिक्यहारकैः ॥ ५२ ॥
भूषणैर्वसनैश्चैव माल्यैश्च गन्धचन्दनैः । रत्नसिंहासने रम्ये सर्वेषां मध्यदेशतः ॥ ५३ ॥
गणेशं वरयामास पूजार्थं शुभकर्मणि । सप्ततीर्थोदकेनैव सुवर्णकलशेन च ॥ ५४ ॥
पुष्पचन्दनयुक्तेन शीतेन वासितेन च । स्वर्गगङ्गाजलेनैव पुष्करोदकपुण्यतः ॥ ५५ ॥
पञ्चामृतेन शुद्धेन पञ्चगव्येन भक्तितः । हेरम्बं स्नापयामास समुद्रोदेन मन्त्रतः ॥ ५६ ॥
वरयामास माल्येन पारिजातस्य नारद ! । रत्नेन्द्रभूषणेनैव वह्निशुद्धेन वाससा ॥ ५७ ॥
गन्धचन्दनपुष्पैश्च रत्नमाल्याङ्गुलीयकम् । तुष्टाव पार्वतीपुत्रं सर्वदेवाधिपं शुभम् ।
विघ्ननिघ्नकरं शान्तं भगवन्तं सनातनम् ॥ ५८ ॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
भगवदुपनयने गणेशाभिषेके नवनवतितमोऽध्यायः ।

---

## शततमोऽध्यायः

### भगवदुपनयनवर्णनम् ।

श्रीनारायण उवाच ।

अथादितिर्दितिश्चैव देवकी रोहिणी रतिः ।

# एकाधिकशततमोऽध्यायः

## भगवदुपनयनवर्णनम् ।

### श्रीनारायण उवाच ।

संस्तूय देवा मुनयो विरेमुश्चैव मानसे । ददृशुः प्राङ्गणे कृष्णं शोभितं पीतवाससा ॥
यथा सौदामिनीयुक्तं नवीनजलदं मुने ! । बकपङ्क्तियुतञ्चैव मालतीमालया तथा ॥
कपाले मण्डलाकारकस्तूरीयुक्तचन्दनम् । सकलङ्कं मृगाङ्कञ्च शोभितं जलदे यथा ॥३॥

द्विभुजं श्यामलं कान्तं राधाकान्तं मनोहरम् ।
ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहविग्रहम् ॥ ४ ॥

रत्नकेयूरवलयरत्नमञ्जीररञ्जितम् । रुदन्तं पितुरुत्सङ्गे बलेन सहितं परम् ॥ ५ ॥
अथ मङ्गलकाले च शुभलग्ने मनोरमे । संवीक्षिते ग्रहैः सौम्यैर्जामलग्नाधिपे स्थिते ॥६॥
असद्ग्रहादृष्टे च सद्ग्रहेक्षित एव च । शुभकर्मसमारम्भं स्वस्तिवाचनपूर्वकम् ॥ ७ ॥
चकार वसुदेवश्चाप्याज्ञया गुरुविप्रयोः । दत्त्वा सुवर्णशतकं ब्राह्मणाय च सादरम् ॥८॥
देवेन्द्रांश्च मुनीन्द्रांश्च नमस्कृत्य पुरोहितम् । गणेशञ्च दिनेशञ्च वह्निञ्च शङ्करं शिवाम्

सम्पूज्य देवषट्कञ्च साक्षतैर्देवसंसदि ।
उपचारैः षोडशभिः संयतो भक्तिपूर्वकम् ॥ १० ॥

शुभाधिवासनं चक्रे वेदमन्त्रेण संसदि । सम्पूज्य नानादेवांश्च दिक्पालांश्च नवग्रहान् ॥
दत्त्वा पञ्चोपचारांश्च भक्त्या षोडशमातृकाः । दत्त्वा च वसुधाराञ्च सप्तधारान् घृतेन च
वेदिराजं वसुं नत्वा सम्पूज्य प्रययौ पुनः । वृद्धिश्राद्धं सुनिर्वाप्य यत्किञ्चिद्वैदिकं तथा
यज्ञं कृत्वा तु वेदोक्तं यज्ञसूत्रं ददौ मुदा । बलदेवाग्रजायैव कृष्णाय परमात्मने ॥१४॥

गायत्रीञ्च ददौ ताभ्यां मुनिः सान्दीपनिस्तथा ।
भिक्षां ददौ च प्रथमं पार्वती-परमादरात् ॥ १५ ॥

अमूल्यरत्नपात्रस्थं मुक्तामाणिक्यहीरकम् । हीरसारविनिर्माणं विधात्रा दत्तञ्च हारकम् ॥
शुभाशिषञ्च प्रददौ शुक्लपुष्पेण दूर्वया । ततोऽदितिर्दितिश्चैव मुनिपत्न्यश्च देवकी ॥

अनन्त उवाच ।

किंवा जानाम्यहं नाथ ! त्वामज्ञोऽनन्तमीश्वरम् ।

अनन्तकोटिब्रह्माण्डकारणं कुम्भकारणम् ॥ २१ ॥

हाविष्णोश्चलोम्नाञ्च विवरेषुजलेषुच । सन्तिविश्वान्यसंख्यानिचित्राणिकृत्रिमाणिच

न्तिसन्तश्च देवाश्च महाविष्णुशिवात्मकाः । त्वदंशाःप्रतिविम्बेषु तीर्थानि भारते यथा

ह्माण्डैकस्थितोऽहञ्च सूक्ष्मनागस्वरूपकः । स्थापितश्चत्वया कूर्मे गजेन्द्रे मशको यथा

परमाणु परं सूक्ष्मं विश्वेषु नास्ति कुत्रचित् ।

महाविष्णोः परं स्थूलं समो नास्ति च कुत्रचित् ॥ २५ ॥

महाविष्णोः परस्त्वञ्च त्वत्परो नास्ति कश्चन ।

स्थूलात् स्थूलतरो देवः सूक्ष्मात् सूक्ष्मतमो महान् ॥ ॥ २६ ॥

आधारश्च महाविष्णो जलरूपो भवान् स्वयम् ।

जलाधारो हि गोलोकस्त्वञ्च स्थावररूपधृक् ॥ २७ ॥

र्वाधारोमहान् वायुःश्वासनिःश्वासरूपकः । भक्तानुग्रहदेहस्त्वनित्यस्य भवतोविभोः

चत्रैर्बहुतरैर्वाथ त्वया दत्तैः पुरैव च । स्तोतुमिच्छामि त्वद्योगं न दत्तं ज्ञानमीश्वर

देवा ऊचुः ।

त्वामनन्तं यदि स्तोतुं देवोऽनन्तो न हीश्वरः ।

न हि स्वयं विधाता च न हि ज्ञानात्मकः शिवः ॥ ३० ॥

सरस्वती जड़ीभूता किं कुर्मः स्तवनं वयम् ॥ ३१ ॥

मुनीन्द्रा ऊचुः ।

दा न शक्ता स्तोतुञ्चेत्त्वाञ्चैवज्ञातुमीश्वरम् । वयं वेदविदः सन्तः किं कुर्मः स्तवनंव

दंस्तोत्रं महापुण्यं देवैश्च मुनिभिःकृतम् । यः पठेत्संयतः शुद्धः पूजाकाले च भक्तितः

हलोके सुखंभुक्त्वा लब्ध्वा ज्ञानं निरञ्जनम् । रत्नयानंसमारुह्य गोलोकं स च गच्छति

यशोदा रोहिणी हृष्टा सावित्री च सरस्वती ।
प्रत्येकं प्रददौ भिक्षां मणिकाञ्चनभूषिताम् ॥ १८ ॥
देवकन्या नागकन्या राजकन्याः पतिव्रताः ।
कामिन्यो बान्धवानाञ्च सस्मिताः स्निग्धलोचनाः ॥ १९ ॥
इन्द्राणी वरुणानी च पवनानी च रोहिणी ।
कुबेरपत्नी स्वाहा च रतिः कामस्य कामिनी ॥ २० ॥
प्रत्येकं प्रददौ भिक्षां वस्त्रभूषणभूषिताम् । भिक्षां गृहीत्वा भगवान् सबलो भक्तिपूर्वकम्
किञ्चिद्ददौ च गर्गाय किञ्चित् स्वगुरवे तथा ।
वैदिकं कर्म निर्वाप्य गर्गाय दक्षिणां ददौ ॥ २२ ॥
देवांश्च भोजयामास ब्राह्मणांश्चापि सादरम् ।
ये ये समाययुर्यत्ते ते च दत्त्वा शुभाशिषम् ॥ २३ ॥
कृष्णाय बलदेवाय महृष्टाः प्रययुर्गृहम् । नन्दः सभार्यो निर्वाप्य शुभकर्म सुतस्य वै
क्रोडे कृत्वा बलं कृष्णं चुचुम्ब वदनं तयोः । उभौ करोद नन्दश्च यशोदा च पतिव्रता ।
श्रीकृष्णस्तं समाश्वास्य बोधयामास यत्नतः ॥ २५ ॥

श्रीकृष्ण उवाच ।

सानन्दं गच्छ हे मातर्यशोदे तात ! सत्वरम् ।
त्वमेव माता पोष्ट्री त्वं पिता च परमार्थतः ॥ २६ ॥
अवन्तिनगरं तात ! यास्यामि सबलोऽधुना ।
मुनेः सान्दीपिनेः स्थानं वेदपाठार्थमीप्सितम् ॥ २७ ॥
तत्रागत्य सुचिरं काले भवति दर्शनम् । कालः करोति कलनं स च भेदं करोति च
सर्वं कालकृतं मातर्भेदं संमीलनं नृणाम् । सुखं दुःखं च हर्षश्च शोकश्च मङ्गलालयम् ।
मया दत्तश्च मन्त्रश्च योगिनामपि दुर्लभम् । सर्वं नन्दश्च सानन्दं त्वामेव कथयिष्यति
इत्युक्त्वा जगतां नाथो वसुदेवसमो ययौ । तदाश्रमं क्षणं प्राप्य ययौ सान्दीपिनेर्गृह
वसुदेवं देवकीञ्च सम्भाष्य विनयेन च । नन्दः समार्यः प्रययौ हृदयेन विदूयता ।

रत्नमणि सुवर्णञ्च माणिक्यमहीरकं तथा। वह्निशुद्धांशुकं रत्नं नन्दाय देवकी ददौ॥
ताश्वञ्च गजेन्द्रञ्च सुवर्णं रथमुत्तमम्। नन्दाय कृष्णः प्रददौ वसुदेवश्च सादरम्॥
रेनुव्रजन् विप्रा देवकीप्रमुखाः स्त्रियः। वसुदेवस्तथाक्रूरोऽप्युद्धवश्च ययौ मुदा॥
लिन्दीनिकटं गत्वा ते सर्वे रुरुदुः शुचा। परस्परञ्च सम्भाष्य ते सर्वे स्वालयं ययुः
ती सपुत्रा पित्रया वसुदेवाज्ञया मुने। नानारत्नमणि प्राप्य प्रययौ स्वालयं मुदा॥
नुदेवो देवकी च पुत्रकल्याणहेतवे। नानारत्नमणि वस्त्रं सुवर्णं रजतं तथा॥ ३८॥
ामाणिक्यहारञ्च मिष्टान्नञ्च सुधोपमम्। भट्टेभ्यो ब्राह्मणेभ्यश्च प्रददौ सादरं मुदा॥
ोत्सवं वेदपाठं हरेर्नामैकमङ्गलम्। विप्राणां भोजनञ्चैव कारयामास यत्नतः॥४०॥
ज्ञातीनां बान्धवानाञ्च पुरस्कारं यथोचितम्।
चकार मणिमाणिक्यमुक्तावस्त्रैर्मनोहरैः॥ ४१॥
इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
भगवदुपनयनं नामैकशततमोऽध्यायः।

---

## द्व्यधिकशततमोऽध्यायः

### विद्यापठनार्थं सान्दीपिनिगुरुसमीपे श्रीकृष्णस्य गमनम्।

श्रीनारायण उवाच।

कृष्णः सान्दीपिनेर्गेहं गत्वा च सबलो मुदा।
ननामश्चकार स्वगुरुं गुरुपत्नीं पतिव्रताम्॥ १॥
शुभाशिषं गृहीत्वा च दत्त्वा रत्नं मणिं हरिः।
गुरवे तस्य भार्यायै तमुवाच यथोचितम्॥ २॥

श्रीकृष्ण उवाच।

त्वत्तो विद्यां लभिष्यामि वाञ्छितां वाञ्छितं मम।

त्वया शुभक्षणे विप्र मां पाठय यथोचितम् ॥ ३ ॥
ओमित्युक्त्वा मुनिश्रेष्ठः पूजयामास तं मुदा । मधुपर्कप्राशनेन गवा वस्त्रेण चन्दनैः ।
मिष्टान्नं भोजयामास ताम्बूलञ्च सुवासितम् । सुप्रियं कथयामास तुष्टाव परमेश्वरम् ।

सान्दीपिनिरुवाच ।

परं ब्रह्म परं धाम परमीश परात्पर । स्वेच्छामयं स्वयं ज्योतिर्निर्लिप्तैकं निरङ्कुश ॥ ४ ॥
भक्तैकनाथ भक्तेश भक्तानुग्रहविग्रह । भक्तवाञ्छाकल्पतरो भक्तानां प्राणवल्लभ ॥ ५ ॥
मायया बालरूपोऽसि ब्रह्मेशशेषवन्दितः । मायया भुवि भूपालो भुवो भारक्षयाय च ।
योगिनो यं विदन्त्येवं ब्रह्मज्योतिः सनातनम् ।
ध्यायन्ते भक्तनिवहा ज्योतिरभ्यन्तरे मुदा ॥ ६ ॥
द्विभुजं मुरलीहस्तं सुन्दरं श्यामरूपकम् । चन्दनोक्षितसर्वाङ्गं सस्मितं भक्तवत्सलम्
पीताम्बरधरं देवं वनमालाविभूषितम् । लीलापाङ्गतरंगैश्च निन्दितानङ्गमूर्च्छितम् ॥ ११ ॥
अलकभषनं तद्वत्पाक्षपद्मं सुशोभनम् । कौस्तुभोद्भासिताङ्गञ्च दिव्यमूर्तिं मनोहरम् ।
ईषद्धास्यप्रसन्नञ्च सुवेशं संस्तुतं सुरैः । देवदेवं जगन्नाथं त्रैलोक्यमोहनं परम् ॥ १३ ॥
कोटिकन्दर्पलीलाभं कमनीयमनीश्वरम् । अमूल्यरत्ननिर्माणभूषणौघैश्च भूषितम् ।
वरं वरेण्यं वरदं वरदानामभीप्सितम् ॥ १४ ॥
चतुर्णामपि वेदानां कारणानाञ्च कारणम् । पाठार्थमत्प्रियस्थानमागतोऽसि च मायया
पाठं ते लोकशिक्षार्थं रमणं गमनं रणम् । स्वात्मारामस्य च विभोः परिपूर्णतमस्य च

गुरुपत्न्युवाच ।

अद्य मे सफलं जन्म सफलं जीवनं मम । पातिव्रत्यञ्च सफलं सफलञ्च तपोवनम् ।
मद्भक्ष्यहस्तः सफलो दत्तं येनान्नमीप्सितम् । तदाश्रमं तीर्थपरं तीर्थपादपदाङ्कितम् ।
तत्पादरजसा पूता गृहाः प्राङ्गणमुत्तमम् ॥ १८ ॥
यस्य त्वत्पादपद्मञ्चैवावयोर्जन्मखण्डनम् । तावद् दुःखञ्च शोकश्च तावद्रोगाश्च रोगकः
तावज्जन्मानि कर्माणि क्षुत्पिपासादिकानि च ।
यावत्त्वत्पादपद्मस्य भजनं नास्ति दर्शनम् ॥ २० ॥

हे कालकाल भगवन् स्रष्टुः संहर्तुरीश्वर । कृपां कुरु कृपानाथ मायामोहनिकृन्तन ॥२१

इत्युक्त्वा साश्रुनेत्रा सा क्रोडे कृत्वा हरिं पुनः ।
स्वस्तनं पाययामास प्रेम्णा च देवकी यथा ॥ २२ ॥

श्रीकृष्ण उवाच ।

मातस्त्वं मां कथं स्तौषि बालं दुग्धमुखं सुतम् ।
गच्छ गोलोकमित्यत्र स्वामिना सह साम्प्रतम् ॥ २३ ॥

त्यक्त्वा प्राकृतिकं मिथ्या नश्वरञ्च कलेवरम् । विधाय निर्मलं देहं जन्ममृत्युजराहरम्
इत्युक्त्वा चतुरो वेदान् पठित्वा मुनिपुङ्गवात् । मासेन परया भक्त्या दत्त्वा पुत्रं मृतं पुरा
रत्नानाञ्च त्रिलक्षञ्च मणीनां पञ्चलक्षकम् । हीरकाणां चतुर्लक्षं मुक्तानां पञ्चलक्षकम्

माणिक्यानां द्विलक्षञ्च वस्त्रं त्रैलोक्यदुर्लभम् ।
हारञ्च दुर्गया दत्तं हस्तरत्नाङ्गुलीयकम् ॥ २७ ॥

दशकोटिं सुवर्णानां गुरवे दक्षिणां ददौ । अमूल्यरत्ननिर्माणं नारीसर्वाङ्गभूषणम् ॥
गुरुप्रियायै प्रददौ वह्निशुद्धांशुकं वरम् । मुनिर्दत्त्वा च पुत्राय सत्सर्वं प्रियया सह ॥
सहसारथमारुह्य ययौ गोलोकमुत्तमम् । तमद्भुतं हरिं दृष्ट्वा ययौ स्वालयं मुदा ॥
एवं ब्रह्मण्यदेवस्य चरित्रं शृणु नारद । इदं स्तोत्रं महापुण्यं यः पठेद्भक्तिपूर्वकम् ॥३१
श्रीकृष्णे निश्चलां भक्तिं लभते नात्र संशयः । अत्यपकीर्त्तिः सुयशा मूर्खोऽभवति पण्डितः
इह लोके सुखं प्राप्य यात्यन्ते श्रीहरेः पदम् । तत्र नित्यं हरेर्दास्यं लभते नात्र संशयः

इति श्रीब्रह्मवैवर्त्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
मुनिपत्नीस्तोत्रं नाम द्व्यधिकशततमोऽध्यायः ।

---

# त्र्यधिकशततमोऽध्यायः

## द्वारकानिर्माणवर्णनम् ।

श्रीनारायण उवाच ।

अथागत्य मधुपुरीं प्रणम्य पितरं विभुः । सबलो वटमूले च सस्मार गरुडं हरिः ॥१॥
सादरं लवणोदञ्च विश्वकर्माणमीप्सितम् । तत्याज गोपवेशञ्च नृपवेशं दधार सः ॥२॥
एतस्मिन्नन्तरे चक्रमाजगाम हरिं स्वयम् । परं सुदर्शनं नाम सूर्यकोटिसमप्रभम् ॥३॥
तेजसा हरिणा तुल्यं परं वैरिविमर्दनम् । अव्यर्थमस्त्रमस्त्राणां प्रवरं परमं परम् ॥४॥
रत्नयानं पुरःकृत्वा गरुडो हरिसन्निधिम् । विश्वकर्मा सशिष्यश्च जलधिः कम्पितस्तथा
हरिं प्रणेमुस्ते सर्वे मूर्ध्ना च भक्तिपूर्वकम् । सस्मितं सादरं यत्नात्तानुवाच कृपानिधिः

श्रीकृष्ण उवाच ।

हे समुद्र महाभाग स्थलञ्च शतयोजनम् ।
देहि मे नगरार्थञ्च पश्चाद्दास्यामि निश्चितम् ॥ ७ ॥

नगरं कुरु हे कारो त्रिषु लोकेषु दुर्लभम् । रमणीयञ्च सर्वेषां कमनीयञ्च योषिताम् ।
वाञ्छितञ्चापि भक्तानां वैकुण्ठसदृशं परम् । सर्वेषामपि स्वर्गाणां परम्पारमभीप्सितम्

दिवानिशं खगश्रेष्ठ सन्निधौ विश्वकर्मणः ।
स्थितिं कुरु महाभाग यावन्निर्माति द्वारकाम् ॥ १० ॥
दिवानिशञ्च मत्पार्श्वे चक्रश्रेष्ठ स्थितिं कुरु ।
ओमित्युक्त्वा तु प्रययुः सर्वे चक्रं विना मुने ॥ ११ ॥

कंसस्य पितरं भद्रमुग्रसेनं महाबलम् । नृपं चकार नगरे क्षत्रियाणां सतामपि ॥ १२ ॥
विजित्य च जरासन्धं निहत्य यवनं तथा । उपायेन महाभाग निर्माणकर्मणीश्वरः ।

श्रीभगवानुवाच ।

शतयोजनपर्यन्तं नगरं सुमनोहरम् । पद्मरागैर्मरकतैरिन्द्रनीलैरनुत्तमैः ॥ १४ ॥

रुचकैः पारिभद्रैश्च पलङ्कैश्च स्यमन्तकैः । गन्धकैर्नालिमीश्चैव चन्द्रकान्तादिभिस्तथा ॥

सूर्य्यकान्तादिभिश्चैव पुत्रैश्च स्फाटिकाकृतैः ।

हरिद्वर्णैश्च मणिभिः श्यामैर्गौरमुखैश्चपैः ॥ १६ ॥

गोरोचनाभिः पीतैश्च दाडिमीबीजरूपकैः । पद्मबीजनिभैश्चैव नीलैः कमलवर्णकैः ॥

मणिभिः कज्जलाकारैरुज्ज्वलैश्च परिष्कृतैः । श्वेतचम्पकवर्णाभैस्तप्तकाञ्चनसन्निभैः ॥

स्वर्णमूल्यशतगुणैरीपद्मकैः सुशोभनैः । गरिष्ठैश्च वरिष्ठैश्च मणिश्रेष्ठैश्च पूजितैः ॥ १९ ॥

यथाविधाने यथोगे यत्र यन्मुक्तमीप्सितम् ।

मणीनां हरणञ्चैव यक्षसङ्घा हिमालयात् ॥ २० ॥

दिवानिशं करिष्यन्ति यावन्निर्माणपूर्वकम् । यक्षैश्च सतमिलक्षैः कुवेरप्रेरितैरपि ॥२१॥

वेतालक्षैः कुष्माण्डलक्षैः शङ्करयोजितैः । दानवैर्ब्रह्मरक्षोभिः शैलकन्यानियोजितैः ॥

कुरु दिव्यञ्च पत्नीनां सहस्राणाञ्च षोडश । अन्यपत्नीजनस्यापि वाराधिकशतस्य च

शिबिरं परिखायुक्तमुच्चैः प्राकारवेष्टितम् । मुक्ताद्वयसयालञ्च सिंहद्वारपरिष्कृतम् ॥२४॥

युक्तञ्चित्रैर्विचित्रैश्च कृत्रिमैश्च कपाटकैः । निषिद्धवृक्षरहितं प्रसिद्धैश्च परिष्कृतम् ॥

सुलक्षणं वन्नवेधं प्राङ्गणञ्च तथैव च । यमुनाश्रमं दिव्यं किङ्कराणां तथैव च ॥२६॥

सर्वप्रसिद्धं निलयमुग्रसेनस्य भूभृतः । आश्रमं सर्वतोभद्रं वसुदेवस्य मत्पितुः ॥ २७ ॥

विश्वकर्मोवाच ।

के ते वृक्षाः प्रशस्ताश्च निषिद्धाश्चापि केशव ।

भद्राभद्रप्रदाश्चापि तान् वदस्व जगद्गुरो ॥ २८ ॥

केयामस्त्रिनियुक्तञ्च शिविरञ्च शुभाशुभम् । दिशि कुत्र जलं भद्रमभद्रञ्च वद प्रभो ॥

भद्रप्रदश्च को वृक्षो दिशि कुत्र प्रवर्त्तते । किं प्रमाणं गृहाणाञ्च प्राङ्गणानां सुरेश्वर ॥

मङ्गलं कुसुमोद्यानं दिशि कुत्र तरोस्तथा । प्राकाराणां किं प्रमाणं परिखानां सुरेश्वर

द्वाराणाञ्च गृहाणाञ्च प्राकाराणां प्रमाणकम् ।

कस्य कस्य तरोः काष्ठं प्रशस्तं शिविरे प्रभो ।

अमङ्गलं वा केषाञ्च सर्वं मां वक्तुमर्हसि ॥ ३२ ॥

श्रीभगवानुवाच ।

...पूर्वे नारिकेलश्च गृहिणाञ्च धनप्रदः । शिविरस्य यदीशाने पूर्वे पुत्रप्रदस्ततः ॥

सर्वत्र मङ्गलार्हश्च तडागो मनोहरः ।

रसालवृक्षः पूर्वस्मिन् नृणां सम्पत्प्रदस्तथा ॥ ३४ ॥

...प्रदश्च सर्वत्र शुभकारो निशामय । बिल्वश्च पनसश्चैव जम्बीरो बदरी तथा ॥

...प्रदश्च पूर्वस्मिन् दक्षिणे धनदस्तथा । सम्पत्प्रदश्च सर्वत्र यतो हि वर्द्धते गृही

...वृक्षश्च दाडिम्बः कदल्याम्रातकस्तथा । धनप्रदश्च पूर्वस्मिन् दक्षिणे मित्रदस्त...

...त्र शुभदश्चैव धनपुत्रशुभप्रदः । हर्षप्रदो गुवाकश्च दक्षिणे पश्चिमे तथा ॥ ३८ ॥

...ने सुखदश्चैव सर्वत्रैव निशामय । सर्वत्र चम्पकः शुद्धो भुवि मङ्गलदस्तथा ॥

अलाबुश्चापि कूष्माण्डमायाम्बुश्च सकिंशुकः ।

खर्जुरी कर्कटी चापि शिविरे मङ्गलप्रदा ॥ ४० ॥

वास्तूककारविल्वश्च वार्ताकुश्च शुभप्रदः ॥ ४१ ॥

...फलश्च शुभदं सर्वं सर्वत्र निश्चितम् । प्रशस्तं कथितं कारो निषिद्धश्च निशामय

धन्यवृक्षो निषिद्धश्च शिविरे नगरेऽपि च ॥ ४२ ॥

... निषिद्धः शिविरे नित्यं चोरभयं यतः । नगरेषु प्रसिद्धश्च दर्शनात् पुण्यदस्तथा ॥

निषिद्धः शाल्मलिश्चैव शिविरे नगरे पुरे ।

दुःखप्रदश्च सततं भूमिपानां सदापि च ॥ ४४ ॥

...षिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च । विशालमतिनिषिद्धश्च सततं दुःखदस्तथा ॥

...हे कारो तिन्तिडीवृक्षो यत्नात्तं परिवर्जयेत् ।

...शतेन धनहानिः स्यात् प्रजाहानिर्भवेद् ध्रुवम् ॥ ४६ ॥

...रेऽतिनिषिद्धश्च नगरे किञ्चिदेव च । न निषिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च ॥

...मतिनिषिद्धश्च प्राज्ञस्तं परिवर्जयेत् । खर्जूरश्च मधूकश्चैव निषिद्धः शिविरे तथा ॥

...षिद्धः प्रसिद्धश्च ग्रामेषु नगरेषु च । वृक्षश्च चणकादीनां धान्यञ्च मङ्गलप्रदम् ॥

...षु नगरे चापि शिविरे च तथैव च । इक्षुवृक्षश्च शुभदः सततं शुभदस्तथा ॥५०॥

अशोकश्च शिरीषश्च कदम्बश्च शुभप्रदः ।
कपित्थ् हरिद्रा शुभदा शुभदश्चार्द्रकस्तथा ॥ ५१ ॥
हरीतकी च शुभदा ग्रामेषु नगरेषु च ।
नवाख्या भद्रदा नित्यं तथा चामलकी ध्रुवम् ॥ ५२ ॥
जानामस्थिशुभदमश्वानाञ्च तथैव च । कल्याणमुच्चैःश्रवसां धात्री स्थापनकारिणाम्
शुभप्रदमन्येषामुच्छित्तिकारणं परम् । वानराणां नराणाञ्च गर्दभानां गवामपि ॥५४॥
कुक्कुटानां शृगालानां मार्जाराणामभद्रकम् । भेटकानां शूकराणां सर्वेषाञ्च शुभप्रदम् ॥
ाने चापि पूर्वस्मिन् पश्चिमे च तथोत्तरे । शिबिरस्य जलं भद्रमन्यत्राशुभमेव च ॥
दीर्घे प्रस्थे समानञ्च न कुर्य्यान्मन्दिरं बुधः ।
चतुरस्रे गृहे कार्ये गृहिणां धननाशनम् ॥ ५७ ॥
दीर्घः प्रस्थः परिमितो नेत्राङ्गेनापि संहतम् ।
शून्येन रहितं भद्रं शून्यं शून्यप्रदं नृणाम् ॥ ५८ ॥
प्रस्थे हस्तद्वयात् पूर्वं दीर्घे हस्तत्रयं तथा ।
गृहाणां शुभदं द्वारं प्राकारस्य गृहस्य च ॥ ५९ ॥
मध्यदेशे कर्त्तव्यं किञ्चिन्न्यूनाधिके शुभम् । चतुरस्रं चन्द्रवेधं शिबिरं मङ्गलप्रदम् ॥
अभद्रं सूर्य्यवेधं शिबिरं मङ्गलप्रदम् । अभद्रं सूर्य्यवेधं प्राङ्गणञ्च तथैव च ॥ ॥ ६१ ॥
शिबिराभ्यन्तरे भद्रा स्थापिता तुलसी नृणाम् ।
धनपुत्रप्रदात्री च पुण्यदा हरिभक्तिदा ॥ ६२ ॥
प्रभाते तुलसी [illegible]द्वा स्वर्णदानफलं लभेत् । मालती यूथिका कुन्दमाधवी केतकी तथा
नागेश्वरं मल्लिकाञ्च काञ्चनं बकुलं शुभम् ।
अपराजिता च शुभदा तेषामुद्यानमीप्सितम् ॥ ६४ ॥
पूर्वे च दक्षिणेचैव शुभदं नात्र संशयः । ऊर्ध्वे षोडशहस्तेभ्यो नैव कुर्य्याद् गृहं गृही
ऊर्ध्वे विंशतिहस्तेभ्यः प्राकारं न शुभप्रदम् ।
सूत्रधारं तैलकारं स्वर्णकारञ्च हीरकम् ॥ ६६ ॥

# चतुरधिकशततमोऽध्यायः

## द्वारकादर्शनार्थं देवादीनामागमनम् ।

श्रीनारायण उवाच ।

एतस्मिन्नन्तरे ब्रह्मा भवान्या च भवः स्वयम् । अनन्तश्चापि धर्मश्च भास्करश्च हुताशनः

कुबेरो वरुणश्चैव पवनश्च यमस्तथा । महेन्द्रश्चापि चन्द्रश्च रुद्राश्चैकादशैव ते ॥ २ ॥

अन्ये देवाश्च मुनयो वसवः सप्त एव च ।
आदित्याश्चापि दैत्याश्च गन्धर्वाः किन्नरास्तथा ॥ ३ ॥

आययुर्द्वारकां द्रष्टुं श्रीकृष्णस्य बलं तथा । आगच्छन्तश्च सहसा वटमूलं मनोहरम् ॥

दृष्ट्वा च देवताः सर्वास्तुष्टुवुः पुरुषोत्तमम् ॥
आकाशाच्च विमानैश्च सम्प्राप्य वटमूलकम् ॥ ५ ॥

ददृशुर्द्वारकां रम्यामतीवसुमनोहराम् । मुक्तामाणिक्यहीरैश्च रत्नराजिविराजिताम् ॥६॥

परितश्चतुरस्राञ्च शतयोजनसंमिताम् ।
सप्तभिः परिखाभिश्च गम्भीराभिश्च वेष्टिताम् ॥ ७ ॥

प्राकारैर्नवभिर्युक्तां लक्षैः क्रीडासरोवरैः । मनोहरैः सपद्मैश्च सहितैश्च मधुव्रतैः ॥८॥

शोभितां सर्वतोभद्रैः पुष्पोद्यानविलक्षकैः । प्रफुल्लपुष्पैः पवनैः सर्वत्र सुरभीकृताम् ॥

आमोदिताञ्च शीतेन मन्दचन्दनवायुना ।
सप्तभिर्नारिकेलानां शोभितां शतकोटिभिः ॥ १० ॥

गुवाकानाञ्च वृक्षैश्च भूषितां सचतुर्गुणैः । चतुर्गुणैर्गुवाकानां गुल्मग्राममहादकैः ॥११

परितां पनसानाञ्च वृक्षैराम्रसमैर्मुने । सुशोभिताञ्च तालानां वृक्षैराम्रसमैर्मुने ॥ १२ ॥

अश्वत्थैर्बदरीभिश्च बिल्वैराम्रातकैर्वरैः ।
शाल्मलीभिश्च जम्बूभिः कदम्बैश्चापि शोभिताम् ॥ १३ ॥

वंशैश्च तिन्तिडीभिश्च चम्पकैर्बकुलैस्तथा । नागेश्वरैर्नागरङ्गैर्जम्बीरैर्दाडिमैर्युताम् ॥१४

खर्जूरैरर्जुनैः पिष्टैरिक्षुभिः काञ्चनैरपि ।
हरीतकीभिर्धात्रीभिरिन्दुभिः परितः प्लुताम् ॥ १५ ॥

शालैः प्रियालैर्हिन्तालैः शिशिरैःसप्तपर्णकैः । अन्यैर्नानाद्रुमैरिष्टैरिष्टां युक्तां परिप्लुताम् ॥
असंख्यैर्मन्दिरे रम्यैरत्युच्चैरपि संस्कृताम् । रत्नेन्द्रसारनिर्माणैर्मुक्तामाणिक्यभूषितैः ॥
माणिक्यहीरकैश्चित्रैः सद्रत्नकलशान्वितैः । मणिभिर्निर्मितैरिष्टैः सोपाननिकरैर्वरैः ॥
कपाटैः कठिनैर्दिव्यैरर्गलाकीलकैर्युताम् । हरिण्मणीनां स्तम्भानां कदम्बैरपि संयुतैः ॥
नानाचित्रैर्विचित्रैश्च सुचित्रैश्च परिष्कृतैः । दर्पणैः सूक्ष्मवस्त्रैश्च शोभितैःश्वेतचामरैः
प्राङ्गणैः पद्मरागाद्यैरिन्द्रनीलपरिष्कृताम् । वीथीभीरत्नखचिते राजमार्गैः समन्विताम्

ग्रीष्मध्याह्नसूर्याभां ज्वलितां रत्नतेजसा ।
गवाक्षलक्षैः संयुक्तां वाजिशालोत्परिष्कृताम् ॥ २२ ॥

दृष्ट्वा च द्वारकां रम्यां ते देवा विस्मयं ययुः । प्रसन्नवदनो देवो लाङ्गली भगवाननः ॥
सस्मार यदुवंशानां समूहमुग्रसेनकम् । वसुदेवं देवकीञ्च पाण्डवांश्च समातृकान् ॥

नन्दं यशोदां गोपालान् राजेन्द्रमुनिपुङ्गवान् ।
गन्धर्वान् किन्नरांश्चैव सहितो यदुपुङ्गवैः ॥ २५ ॥

नन्दोयशोदा गोपाश्च जनन्या सहपाण्डवाः । गन्धर्वाः किन्नराश्चैव विद्याधर्यश्चनारद

किन्नर्यश्चापि नर्तक्यो गायका वाद्यभाण्डकाः ।
भिक्षुका भाण्डकाश्चैव भट्टाश्च गणकास्तथा ॥ २७ ॥

नानादेशोद्भवा भूपा वैद्याश्चान्येवमानवाः । सन्यासिनश्च यतयोऽवधूताब्रह्मचारिणः ॥
आययुर्मुनयः सर्वे सशिष्याः सिद्धपुङ्गवाः । सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥
सनत्कुमारो भगवानज्ञानिनाञ्च गुरोर्गुरुः । शिष्यैस्त्रिकोटिभिःसार्द्धं पञ्चवर्षो दिगम्बर
शिष्यैस्त्रिलक्षैःसहितोदुर्वासाभगवानजः । लक्षशिष्यैः कश्यपश्चवाल्मीकश्चत्रिलक्षकैः ॥
लक्षशिष्यैर्गौतमश्च कोटिभिश्च बृहस्पतिः । शुक्रस्त्रिकोटिभिःसार्द्धंभरद्वाजश्चलक्षकैः ॥

शिष्यैःस्त्रिकोटिभिः सार्द्धमङ्गिरा भगवानजः ।
वशिष्ठः कोटिभिः शिष्यैः प्रचेताः कोटिभिस्तथा ॥ ३३ ॥

त्रिलक्षैश्च पुलस्त्यश्चाप्यगस्त्यःकोटिभिः सह । पुलहोलक्षशिष्यैश्चक्रतुर्लक्षैस्तथैव च
अत्रिस्त्रिकोटिभिः सार्द्धं भृगुश्च पञ्चकोटिभिः ।
त्रिकोटिभिर्मरीचिश्च शतानन्दः सहस्रकैः ॥ ३५ ॥
सार्द्धं त्रिकोटिभिः शिष्यै ऋष्यशृङ्गो विभाण्डकः ।
पाणिनिः कोटिभिःशिष्यैर्लक्षैः कात्यायनस्तथा ॥ ३६ ॥
याज्ञवल्क्यः सहस्रैश्च व्यासःशिष्यत्रिकोटिभिः । शिष्यैर्लक्षैश्चसहितोगर्गःकुलपुरोहितः
गालवश्चसहस्रैश्चसहस्रैःसौभरिस्तथा । त्रिकोटिभिर्लोमशश्चमार्कण्डेयस्त्रिकोटिभिः
सान्दीपिनिर्द्दयलश्च सच्छिष्यैश्च त्रिकोटिभिः ।
वोढुः शिष्यैः कोटिभिश्च लक्षैः पञ्चशिखस्तथा ॥ ३६ ॥
अहंनारायणश्चैव नरोममसहोदरः । शिष्यैस्त्रिकोटिभिः सार्द्धंविश्वामित्रश्च कोटिभिः
त्रिकोटिभिर्जरत्कारुरास्तीकश्च त्रिकोटिभिः ।
त्रिकोटिभिःपर्शुरामो वत्सो लक्षैश्च शिष्यकैः ॥ ४१ ॥
दशत्रिलक्षैः शिष्यैश्च कपिलः पञ्चकोटिभिः । संवर्तश्चत्रिलक्षैश्चाप्युतथ्यश्चतथैव च
सहस्रैर्जैमिनिश्चैव पैलो लक्षैस्तथैव च । सुवर्णश्च सहस्रैश्च वैशम्पायन एव च ॥
शिष्यैर्लक्षैः समेतश्च व्यासशिष्यःपुरोगमः । लक्षैःशिष्यैस्तथाभृङ्गीचोपमन्युस्तथैव च
सहस्रैश्च गौरमुखः कचो लक्षैर्गुरोःसुतः । अश्वत्थामातथाद्रोणः कृपाचार्यःसशिष्यकः
भीष्मःकर्णश्च शकुनी राजादुर्योधनस्तथा । नृपस्यभ्रातरः सर्वे चान्ये भूपा जगद्गुरुम्

श्रीभगवानुवाच ।

शुभकर्मणि निष्पन्ने यास्यन्ति वेसमागताः । शिवब्रह्मादयो देवा मुनयश्च तथापरे ॥
तत्रापि यादवैः सार्द्धं प्रविशन्तु द्वारकांपुरीम् । मत्पित्रामातृभिः सार्द्धं माहेन्द्रेचक्षणेनृप
अपरेयदवोऽन्ये च यास्यन्ति मथुरांपुरीम् । श्रुत्वेति वित्रसो राजा तमुवाच भयाकुलः ॥

उग्रसेन उवाच ।

वासुदेव न यास्यामि भूमिं तां पैतृकीं पुनः । सर्वतीर्थपरांशुद्धां दैवे कर्मणि पैतृके ॥
पावकेभूमिदेशेच पितॄणां निर्वपेत्तु यः । मद्भूमिःस्वामिपितृभि.श्राद्धकर्मणि हन्यते ॥

